उफ़्कापेश

O.P.-Rs10

# वेणीसंहारनाटकम् ।

श्रीभट्टनारायण विरचितम्

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यकृतटीकयासहितम् ।

वि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतम् ।

अभिनवसंस्करणम् ।

कलिकातानगरे

काव्यप्रकाशयन्त्रे

मुद्रितम् ।

इं १८७५

# वेणीसंहारनाटकम् ।



## प्रथमाङ्कः ।

### नान्दी ।

निषिद्धैरप्येभिर्लुलितमकरन्दो मधुकरैः
करैरिन्दोरन्तश्छुरित इव संभिन्नमुकुलः ।

---

(१) वाग्देवीं हृदये ध्यात्वा वेणीसंहारनाटकम् ।
व्याख्यायते सुबोधाय श्रीतारानाथशर्म्मणा ॥

रङ्गविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजयेदिति बोधितकर्त्तव्यताकां नान्दीमुपनिबध्नाति निषिद्धैरित्यादि । निषिद्धैरित्यनेन ये यत्रात्यन्तासक्तास्ते निवारिता अपि ततो न निवर्त्तन्ते इति ध्वनयता दुर्य्योधनादयः अत्यन्ताकार्य्यासक्ता भीष्मादिभिर्निवारणेऽपि नाकार्य्येभ्यो विरता इति सूचितम् । लुलितमकरन्दः चालितपुष्परसः न तु आस्वादितमधुकः निवारणेन व्याकुलतया सुखेनास्वादासम्भवात् । इन्दोः करैरन्तर्मध्ये छुरितो लिप्त इव इतरेषामिन्दुकरैः वाह्यमात्रस्पर्शः पुष्पोच्चयस्य त्वत्यन्तमधुस्यन्दिताद्योतनायान्तर्लिप्तत्वमत्र सूचितम् । संभिन्नमुकुलः विदलितमुकुलोभावः विकाशित इत्यर्थः । अञ्जलिरञ्जलिपरिमाणं पुष्पाणामिति षष्ठी तत्रैव परिमाणेऽन्विता तथा च अञ्जलिपरिमितानि पुष्पाणीति वाक्यार्थः परिमाणपरिमेययोरभेदोपचाराञ्च

विधत्तां सिद्धिं नो नयनसुभगामस्य सदसः
प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयम् ॥ १ ॥

अपि च।

कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसम्
गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम्।

---

तथा निर्देशः। अत एव च पुष्पाणां प्रकीर्णतामादायैव अञ्जलेः प्रकीर्णत्वसम्भवः यथाश्रुतपरत्वे अञ्जलेर्युतहस्तार्थकतया तस्य प्रकीर्णत्वासम्भवः। सूत्रधारेण नान्दीकरणसमये सपुष्पाञ्जलिना भवितव्यमिति सूचनाय अयमित्युक्तम् सदसः सदसि स्थितजनानां नयनसुभगाम् अभिनयदर्शनद्वारा प्रीतिदां सिद्धिमभिनेयसम्पत्तिं विधत्ताम् करोतु कवीनां निरङ्कुशत्वेन कर्तृगतफलाभावेऽपि तङ्। प्रार्थनायां लोट्। विधत्तादिति तातङन्तः पाठस्तु समीचीनः। केचित्तु पुष्पाञ्जलिः अयं नवश्च एतौ हरिचरणयोः हरिचरणसदृशा प्रकीर्णः क्षिप्तः अर्पितश्च सिद्धं विधत्ताम् कुरुतामिति द्विवचनान्ततया व्याकुर्वन्ति। तत्र च प्रबन्धप्रतिपाद्यस्यार्थस्य लुलितमकरन्दादिकतया प्रबन्धस्य तथात्वं द्रष्टव्यम्। तथाहि मधुना मदेन कथ्यन्ते इति कराः क्षिप्यन्ते वा इत्यर्थः तैः दुर्योधनादिभिः भीमादिभिर्निषिद्धैरपि लुलितशालिनो मकरन्द इव सारांश ऐश्वर्यं यस्य तथा शत्रुभिः पराभूतोऽपि इन्द्रकरणात् शुद्धस्वभावः पश्चाच्च पणसमयातिवाहनेन विदलितदैन्यस्तनुलभावश्च नायक इति यथासम्भवं विशेषणं योज्यम्।

(२) द्वादशचरणात्मकनान्दीरूपस्य विधित्सितस्यापर्यवसानं सूचयन्नाहापि चेत्यादि। केलिकुपितां कौतुक एव कुपितां प्रणयकोपवतीं रासे क्रीड़ाविशेषे "रासो विदग्धगोष्ठ्यान्तु क्रीड़ायामपि गोदुहामिति" कोषात् रसं रागमुत्सृज्य गच्छन्तीं राधिकामनुगच्छतः तत्प्रकारमाह तत्पादेत्यादि तस्या राधायाः पादयोः प्रतिमासु अङ्केषु निवेशितप्रदश तत्पादाङ्कस्पर्शेनापि कृतार्थम्मन्यमानतया तत्र पददानेऽपि

तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गते-
रक्षुण्णोऽनुनयः प्रसन्नदयिताद्दृष्टस्य पुष्णातु वः ॥ २ ॥

अपि च ।

दृष्टः सप्रेम देव्या किमिदमिति भयात् सम्भ्रमाच्चासुरीभिः
शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन ।

---

तत्स्पर्शसम्भावनया दत्तचरणस्य अत एव पदाङ्कस्पर्शादपि उद्भूतरोमोद्गते-र्जातरोमाञ्चस्य तथा रोमोद्गमदर्शनेन च "अयं मय्यत्यन्तानुरक्तः यतो मत्पादाङ्कस्पर्शेनाप्यस्य रोमाञ्चोदय इति" निश्चित्य प्रसन्नया कृतप्रसादया दयितया दृष्टस्य अत एव अक्षुण्णः सफलः तत्प्रसादनार्थमेवानुनयस्य कर्त्तव्यतया तत्प्रसादे च जाते अनुनयस्य सफलतेतिभावः । अत्र प्रबन्धप्रतिपाद्यानि द्रौपदीकोपरोदने शत्रुबधानन्तरं भीमकृतानुनयस्य सफलत्वं द्रौपदीप्रसादश्चेत्येतानि वस्तूनि सूचितानि ।

(३) मयेन दैत्यशिल्पिना निर्मितं पुरं मयपुरं मध्यपदलोपी समासः त्रिपुरासुरपुरमित्यर्थः तस्य दहने दहनसमये नानाभावेन भवान्यादिभिर्दृष्टः शिवो युष्मान् पात्वित्यन्वयः । केन केन कथं कथं दृष्टस्तदाह देव्या सप्रेम, "धन्याहं यस्या वल्लभेनेदृशं पुरं दग्धमिति" जातानुरागसहितम् । आसुरीभिः असुरपत्नीभिः किमिदमापतितमिति भयात्, सम्भ्रमात् "आः कष्टमीदृशस्याप्यसुरनाथस्यायं परिभवः कदाचिदस्मत्स्वामिनामपीदृक् स्यादिति" उद्वेगाच्च । ऋषिभिः सकरुणम्, सदयम् कारुण्ये हेतुं वदन् तान् विशिनष्टि शान्तेत्यादि शान्तमुपशमवत् अन्तः अन्तःकरणं येषां ते तत्त्वमनारोपितरूपं यथार्थं ब्रह्मेति यावत् सारो वेद्यतया प्रधानं येषां ते पश्चात् पुनः कर्मधारयः तथा च शान्तान्तःकरणत्वात् तत्त्वप्रधानत्वाच्च तेषां दुःखिदुःखदर्शने दया युक्तैव मैत्रीकरुणामुदितोपेक्षारूपचित्तवृत्तीनां विषयविशेषेषु शान्तात्मनामेवोदयादिति भावः । विष्णुना सस्मितेन "इच्छामात्रेणैव नियन्तुं शक्यस्यापि तस्य दहने जगदीशेनेदृक् प्रयासोऽङ्गीकृत इतीषद्धसतेत्यर्थः ।

आदायास्त्रं सगर्वैरुपशमितवधूसम्भ्रमैर्दैत्यवीरैः
सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ३ ॥

प्रबन्धप्रतिपाद्यभारतसंग्रामोऽपि देव्या द्रौपद्या सप्रणयम्, आसुरीभिरसुरप्रकृतिभिः दुर्योधनादिवधूभिः भयोद्वेगाभ्याम्, ऋषिभिः नारदादिभिः सकरुणं, दैत्यैर्घटोत्कचादिभिः सगर्वैः, इन्द्रेण सानन्दं, कृष्णेन च" मयैव पूर्वं निहता धार्त्तराष्ट्रा इत्यभिप्रायेण हतानां हननार्थमेषां मुधा उद्योग इति हसता दृष्ट इत्यपि सूचितम् ।

पाठान्तरे नान्दी ।

जयति स नाभिर्जगतां स्वनाभिरम्भोरुहब्जगद्बीजः ।
दामोदरो निजोदरगह्वरनिविष्टजगदण्डः ॥ १ ॥

अपिच ।

जयति स भगवान् कृष्णः शेते यः शेषभोगशय्यायाम् ।
मथेत्र पयः पयोधरपर इवाम्भोनिधिः कृष्णः ॥ २ ॥

अपिच ।

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्या ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १ ॥

(१) नान्द्यन्ते सूत्रधारः ।

(१) आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्तितेत्युक्तलक्षणा । सा चेह द्वादशपदा श्लोकत्रयात्मकत्वात् पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुतेत्युक्तेः पदञ्च क्वचित् सुप्तिङन्तरूपं क्वचिच्च श्लोकचरणरूपं यथासम्भवं ग्राह्यम् । एतेन नवाञ्जलिपुटेत्यादि श्लोकानन्तरं नान्द्यन्ते सूत्रधार इति पाठः प्रामादिक एव तथात्वे नान्द्याः षोडशपदत्वापत्तेः । सूत्रधारो वदतीति शेषः

(१) श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे॥

अलमतिविस्तरेण। * [समन्तादवलोक्य तत्रभवतः (२) परिषदग्रेसरान् सर्वान् विज्ञापयामि। ]

---

एवं सर्वत्र। नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः।

(१) रङ्गं प्रसाद्य मधरैः श्लोकैः काव्यार्थसूचकैः। रूपकस्य कवेराख्यागोत्राद्यपि स कीर्त्तयेदित्युक्तेः प्रथमं ग्रन्थस्य भारतार्थप्रतिपादकत्वसूचनाय भारतं तत्कर्त्तारञ्च स्तौति श्रवणेत्यादि। व्याप्यायनकरत्वेन उपदेशद्वारा मोक्षरूपामृतप्रदत्वेन वा भारतस्यामृतत्वेन प्रशंसनम्। तत्कर्त्तुश्च सत्वप्रधानतया प्रशंसनमिति द्रष्टव्यम्। अरागम्। अरजस्कं रजोरागात्मकं विद्धि तृष्णासङ्गसमुद्भवमिति गीतायां रजसो रागात्मकत्वाभिधानात् रागशब्देनात्र रजोगुण एव गृह्यते अकृष्णमकलुषं तमोरहितं तथा चोभयविशेषणाभ्यां रजस्तमोगुणाभ्यामनभिभूतसत्वप्रधानमिति फलितम् अत्र अतृष्णमिति पाठस्तु प्रामादिकः। रागस्य तृष्णाहेतुताया गीतायामुक्तत्वात् रागनिषेधेनैव तन्निषेधलाभे तत्कथनस्यानयोक्तत्वदोषग्रस्तत्वात्। भारतप्रशंसया चास्य भारतमूलकत्वं सूचितं तत्सूचनेन च ख्यातवृत्तप्रतिपादकत्वेनास्याग्रे वक्ष्यमाणनाटकत्वोपपत्तिरित्याशयः।

(२) एवं काव्यार्थं सूचयित्वा रङ्गं प्रसादयित्वा विज्ञाप्य सामाजिकान् समन्तादवलोक्य तानभिमुखीकर्त्तुं विज्ञापनां प्रतिजानीते तत्रभवत इत्यादि तत्रभवतो मान्यानित्यर्थः सर्वामेव प्रतिज्ञायां सभ्यानां तच्छ्रवणे कुतूहलित्वं भवति विज्ञापना प्रतिज्ञातेति भावः।

---

* [अलैव अलमतिप्रसङ्गेन भवन्तः परिषदग्रेसराः विज्ञाप्यं नः किञ्चिदस्ति। इति पाठः ]

अयं वाङ्गपुस्तकपाठस्त्वसमीचीनः भवच्छब्दस्य सर्वनामत्वेन सम्बोधनविभक्त्यन्ततया क्वापि प्रयोगादर्शनात्।

(१) कुसुमाञ्जलिरपर इव प्रकीर्य्यते काव्यबन्ध एषोऽत्र मधुलिह इव मधुबिन्दून् विरलानपि भजत गुणलेशान् ॥

यदिदं कवेर्मृगराजलक्ष्मणो, (२) भट्टनारायणस्य अभिनवकृतिं वेणीसंहार (३) नामकं नाटकं (४) प्रयोक्तु-

---

(१) प्रतिज्ञातां विज्ञापनामाह कुसुमाञ्जलिरित्यादिगुणलेशानित्यनेनौद्धत्यं परिहृतम् ।

(२) कवेराख्यामाह मृगराजलक्ष्मण इति मृगराजशब्देन तद्वाच्यार्थवाचकः सिंहशब्दो लक्ष्यते तच्चिह्नस्य सिंहोपाधिकस्येत्यर्थः । वस्तुत: मृगेण शशेन राजते इति मृगराजः शशधर: तच्छब्देन च तद्वाच्यार्थवाचको द्विजराजशब्द: प्राग्वल्लक्ष्यते तेन द्विजराजोपाधिकस्येत्यर्थः अनेन विप्रगोत्रत्वकथनात् न तदंशे न्यूनता युक्तञ्चैतत् शौर्य्यादिगुणेन क्षत्रियस्यैव सिंहोपाधिसम्बन्धसम्भवात् ब्राह्मणस्य तथात्वानौचित्यात् । साक्षात् द्विजराजशब्दमपहाय मृगराजशब्देन व्यपदेशस्तु मृगराजस्य सिंहस्य लक्ष्म जटाधारित्वमिव लक्ष्म जटाधारित्वं यस्येत्यर्थलाभद्योतनार्थैव कविपक्षे जटाधारित्वं वेदपाठभेदेषु संहितापदक्रमजटाघनेषु जटारूपपाठविशेषस्य धारणात् तथाच जटान्तवेदपाठित्वेन जटाधारित्वलक्षण इत्यर्थलाभः ।

(३) दृश्यकाव्यरूपकस्याख्यामाह वेणीसंहारेति। संहारः संहरणं संबन्धनमिति यावत् वेण्या द्रौपदीकेशरचनायाः संहारो यस्मिन् तत् वेणीसंहारम् वेणीसंहारस्य च प्रतिपाद्यतया ग्रन्थं सम्बन्धाच्च विरुध्यते । एतच्च वेणीनामकमपि दर्पणादौ वेण्यामित्याद्यसकृदुक्तेः तथा च "तदिष्यधिकृत्य" अधिकृत्य कृते ग्रन्थे (४, ३, १८७ पा० सू०) विहितस्याणः "लुबाख्यायिकाभ्यो बहुलमिति" तत्कृतस्यवार्त्तिकेन वा लुपि तद्धितलुपि च प्रकृतिलिङ्गभागितया शकुन्तलावासवदत्तादिवत् स्त्रीत्वात् वेणीति सिद्धम् शकुन्तलाया इव भारतोपलब्धार्थकत्वेनास्या आख्यायिकारूपत्वम् ।

( ४ ) दृश्यकाव्यस्यानेकविधत्वेऽपि अस्य विशेषरूपत्वमाह नाट-

मुद्यता वयं, तत्र च कविपरिश्रमानुरोधाद्वा उदात्तकथा-वस्तुगौरवाद्वा (१) नवनाटकदर्शनकुतूहलाद्वा भवद्भिरवधानं (२) दीयमानमभ्यर्थये ।

नेपथ्ये । (३) भाव ! (४) त्वर्य्यतां त्वर्य्यताम्, एते खलु आर्यविदुराज्ञया पुरुषाः सकलमेव शैलूषजनं व्याहरन्ति * "प्रवर्त्तयन्ताम्" आतोद्यविन्यासादिका विधयः (५)

Arrangement of the musical instruments &c.

---

कमिति तत्र "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् । प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः । एक एव भवेदङ्गी शृङ्गारो वीर एव वा" इत्युक्तलक्षणम् । एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनेन सम्बन्धः सन्धिः स च मुखप्रतिमुखादिभेदेन पञ्चविधस्तेन युक्तमित्यर्थः । अत्र च वीररस एवाङ्गी ।

(१) उदात्तम् औदार्यादिगुणयुक्तं यद्वस्तु नायकस्तस्य कथा तत्र गौरवं श्रद्धातिशयस्तस्मादित्यर्थः ।

(२) अवधानं विषयान्तरपरिहारेण चित्तस्यैकत्र समावेशनम् । कथाश्रवणावधाने हि कवेः क्लेशसाफल्यप्रवणता विषयसौन्दर्यं नववस्तुदर्शनकुतूहलित्वं वा एकैकमपि कारणमिह तु तत् त्रितयमपि समुदितमस्तीत्यवश्यमवधानं देयमिति भावः ।

(३) नेपथ्ये नाट्यशालायां नेपथ्यं नाट्यशालायां नेपथ्यञ्च विभूषणे इत्युक्तेः । सा च जवनिकान्तर्भूमिरेव ।

(४) भाव ! विद्वन् ! भावो विद्वानथावुक इत्यमरोक्तेः ।

(५) विधयः विधानानि ।

---

* [ परिषन्मुखे इति क्वचिदधिकः पाठः ]

प्रवेशकालः किल तत्रभवतः पाराशर्यनारदतुम्बुरुजामदग्न्यप्रभृतिभिर्मुनिवृन्दारकैरनुगम्यमानस्य भरतकुलहितकाङ्क्षया स्वयं प्रतिपन्नदौत्यस्य देवकीसूनोर्देवस्य चक्रपाणेर्महाराजदुर्योधनशिविरसंनिवेशं प्रति (१) [प्रस्थातुकामस्येति।]

सूत्र। आकर्ण्य सानन्दम्। अहो नु खलु (२) भोः भगवता जगदुत्पत्तिस्थितिनिरोध(३)प्रभविष्णुना विष्णुना अद्यानुगृहीतमिदं भरतकुलं सकलञ्च राजकम् अनयोः कुरुपाण्डवराजपुत्रयोराहवकल्पान्तानल (४) प्रशमनहेतुनानेन स्वयं सन्धिकारिणा कंसारिणा दूतेन। तत् किमिति पारिपार्श्विक! (५) नारभयसि कुशीलवैः (६) सह सङ्गीतकम्।

---

(१) शिविरसन्निवेशं सैन्यनिवासस्थानं प्रति भगवतः प्रवेशकाल इति पूर्वेणान्वयः एवमन्वयसम्भवे प्रस्थातुकामस्येत्यधिकपाठकल्पनं व्यर्थम्।

(२) अहो नु खलु भोरित्यव्ययसमुदायोऽत्यन्ताश्चर्यसूचकः।

(३) निरोधः विनाशः।

(४) आहवं युद्धं कल्पान्तानल इवेत्युपमितसमासस्तेन तस्य पूर्वपदार्थप्राधान्येन राजपुत्रयोः कल्पान्तानलसदृशाहवप्रशमनस्य सम्भवः रूपके तु तदन्वयो न सम्भवतीति बोध्यम्।

(५) सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह। काव्यार्थसूचनालापं स भवेत् पारिपार्श्विक इति भरतोक्तलक्षणो नटविशेषः।

(६) कुशीलवैर्नटैः भरतास्तु कुशीलवा इति भरतोक्तेः।

प्रविश्य (१) पारिपार्श्विकः । भवतु आरम्भयामि । कतमं समयमाश्रित्य गीयताम् ।

सूत्र । नन्वमुमेव चन्द्रातपनृत्यत्क्रौञ्चहंसकुलसप्तच्छद-कुमुदपुण्डरीककाशकुसुमपरागधवलितगगनदिङ्मण्डलम् स्वादुजलजलाशयं शरत्समयमाश्रित्य प्रवर्त्त्यतां सङ्गीतकम् तथा ह्यस्यां शरदि ।

(२) सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥

पारिपार्श्विकः । ससंभ्रमम् । भाव ! शान्तं पापं प्रतिहतम् अमङ्गलम् । (३)

---

(१) अपटीक्षेपेण स्वयं प्रवेशे नाट्ये प्रविश्येत्युक्तिः एवं सर्व्वत्र द्रष्टव्यम् ।

(२) श्लेषच्छायोपदेशैश्च समुद्दिष्टं विसर्पति । यत् फलोदयपर्य्यन्तं तद्बीजमिह कीर्त्तितमिति भरतोक्तफलोदयपर्य्यन्तं प्रबन्धप्रतिपाद्यमर्थं बीजरूपं श्लेषेण वर्णयति सत्पक्षा इत्यादि । धार्त्तराष्ट्रा हंसविशेषाः धृतराष्ट्रसुताश्च कालवशात् शरत्कालात्मरात् समयनियोगाच्च मेदिनीपृष्ठे भूमितले निपतन्ति मानससरस आगच्छन्ति निःशेषेण पतन्ति समूलमुच्छिद्यन्ते चेत्यर्थः विशेषणान्यस्येनोभयं दर्शयति सत्पक्षाः शोभनपतत्राः विद्यमानसैन्यादिसहायाश्च मधुरगिरः मधुरशब्दाः मधुरवाणीकाश्च प्रसाधिताशाः भूषिताशेषदिग्विभागाः आयत्तीकृताशेषदिग्जनाश्च मदेन हर्षेण गर्व्वेण च उद्धतारम्भाः उत्कटव्यापाराः उच्छृङ्खलचरिताश्च ।

(३) शान्तं पापमनिर्द्देश्ये इत्युक्तेः न वक्तव्यमित्यर्थः । अवक्तव्यत्वे हेतुमाह प्रतिहतमित्यादि अमङ्गलमशिवं तद्धेतुभूतं वाक्यं प्रतिहतं प्रतिघातेनोच्चारितम् ।

सूत्र । सर्वैलच्यस्मितम् । मारिष ! शरत्समयवर्णनाशंसया [ हंसा धार्त्तराष्ट्रा इति व्यपदिश्यन्ते ] तत् किं शान्तं पापं प्रतिहतममङ्गलम् ।

पारि । न खलु जाने (१) अमङ्गलाशंसयाऽस्य वो वचनस्य यत् सत्यं (२) कम्पितमिव मे हृदयम् ।

सूत्र । मारिष ! (३)ननु सर्वमेवेदानीं प्रतिहतममङ्गलं स्वयं प्रतिपन्नदौत्येन सन्धिकारिणा कंसारिणा । तथाहि ।

(४) निर्वाणवैरदहनाः प्रशमादरीणाम्
नन्दन्तु पाण्डुतनयाः सह माधवेन ।

---

(१) न खलु जाने किन्तु जानाम्येव यत् शरद्वर्णनप्रकरणे वतया वचनस्य हंसपरत्वम् न त्वन्यपरत्वम् ।

(२) यत्सत्यमिति शब्दसमुदायोऽसम्भावनेयार्थसूचकः असम्भव्येतद्यत्सत्यमिति भरतोक्तेः । तच्च कम्पनक्रियान्वयि असंभावितमपि हृदयकम्पनं वो वचनस्यामङ्गलार्थस्यापि प्रतिपादन सामर्थ्यात् कम्पितमिवेत्यर्थः ।

(३) मारिष आर्य्य ! आर्य्यस्तु मारिषइत्यमरोक्तेः ।

(४) अरीणां शत्रूणां "म्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखं" इत्युक्तेरेकस्यापि सत्त्वे न सुखमित्यतो बहुवचनम् । प्रशमात् माधवेनेत्यर्थात् सन्धिकरणद्वारा शान्तेः प्रापणात्, निर्व्वाणे दाहनिवृत्तौ दाहकनिवृत्तिवत् शान्तिप्रापणेन अरिभावापगमे निःशेषेण निवृत्तो वैरदहनो विद्वेषानलो येषां तथाभूताः सन्तः माधवेन सह

---

[ हंसान् धार्त्तराष्ट्रनिति व्यपदिशामि न धृतराष्ट्रसुतान् ]

Goodwill or love

रक्तप्रसाधितभुवः क्षतविग्रहाश्च

स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥

May dwell in heaven; i.e. di

नेपथ्ये साधिक्षेपम्। आः! पाप दुरात्मन्! वृथामङ्गल-पाठक! शैलूषापसद!। (१)

---

पाण्डुतनयाः नन्दन्त्वित्यन्वयः। अत्र अरिप्रशमन इत्यस्य हेतोरन्वयोपपत्तये पूर्वपदार्थप्रधानः वैरं दहन इवेति उपमितसमासो ग्राह्यः न तु वैरमेव दहन इति रूपकसमासस्तस्य उत्तरपदार्थप्रधानतया उक्तहेतोरन्वयानुपपत्तेः। वस्तुतः दुःखाभावे सत्येव आनन्दोदयात् तत्पदस्य दुःखाभावपरत्वं कल्पनीयं तथा च निर्वाणं निवृत्तं वैरस्य विद्वेषस्य दहनं तापो येषामित्येव विग्रहः साधीयान् अरिभावप्रशमनेन च तद्विषयकविद्वेषाभावात् तत्कृततापरहिता इत्यर्थः। रक्तेन अनुरागेण प्रणयेनेत्यर्थः प्रसाधिता आयत्तीकृता भूर्भूस्थलोको यैस्तथाभूताः क्षतो विनिवृत्तो विग्रहो युद्धं येषां ते तथाभूताः सभृत्याः कुरुराजसुताः स्वस्थाः सुखिनः भवन्तु। पक्षे अरीणां शत्रूणां माधवेन सह वैरित्यर्थात् प्रशमात् निवारणात् समूलमुच्छेदात् निर्वाणवैरदहना निवृत्तविद्वेषकृततापाः। रक्तेन रुधिरेण प्रसाधिता अलङ्कृता भूर्यैस्ते तत्र हेतुः क्षतविग्रहा विक्षतशरीराः स्वस्थाः स्वर्गस्थाः भवन्त्वित्यर्थः "सुस्थिते च मृते स्वस्थ" इति कोषः। अत्र श्लिष्टेन वाक्येन प्रकरणप्रतिपाद्यस्यार्थस्याभिधानात् श्लेषगण्डाख्यं नाटकाङ्गं यथोक्तं भरतेन "द्व्यर्थता यत्र वाक्यानां श्लेषेणार्थः प्रतीयते। शब्दभङ्ग्याऽप्रयुक्तोऽपि श्लेषगण्डः स उच्यते। इति"। शब्दभङ्ग्या विलक्षणशब्दसन्निवेशनेन अनुपात्तः अप्राकृतः अपिकारात्प्राकृतः अर्थः। दर्पणकृता त्विदं पताकास्थानत्वेनोक्तम्। "वचः सातिशयश्लिष्टं नानाबन्धसमन्वितम्। पताकास्थानमुद्दिष्टमिति" लक्षयित्वेदमुदाहृतम्।

(१) शैलूषेषु नटेषु अपसद अधमः तत्संबुद्धौ।

(१) लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ॥

[ सूत्र । आकर्ण्य सभयम् नेपथ्याभिमुखमवलोक्य च । (२) ।]*

[ पारि । आः कुत एतत् । ]

सूत्र । पृष्ठतो विलोक्य । अये ! (३)कथमयं वासुदेव-गमनात् कुरुसन्धानमसृष्यमाणः पृथुललाटतटघटितविकट†

---

(१) लाक्षाप्रधानं गृहं लाक्षागृहं विषमिश्रमन्नं विषान्नं मध्यपदलोपी समासः । सभाप्रवेशः द्यूतार्थं सभायां प्रवेशनं, परिधीयते इति परिधानं वसनं कर्मणि ल्युट् । इह नाटकीयस्य फलहेतुभूतस्य विषानलादेः सर्वस्य कीर्त्तनात् मयि जीवतीत्यनेन च उत्साहस्य कथनात् स्वस्था भवन्त्वित्यनेन च अवसानस्य कीर्त्तनात् विद्धकं नाम नाटकाङ्गं तदुक्तं भरतेन "नाटकीयफले हेतुभूतस्याध्यक्षकीर्त्तनात् । आफलोदयमुत्साहावसानाभ्यां तु विद्धकमिति" । दर्पणकृता तु "काव्यार्थस्य समुत्पत्तिरुपक्षेप इतीष्यते" इति मुखाङ्गविशेषमुपक्षेपकं लक्षयित्वा एतत् पद्यमुदाहृतम् ।

(२) नेपथ्यस्याभिनेयरूपधारणस्थानस्याभिमुखं द्वारं विलोक्य वदतीति शेषः ।

(३) अये इति निपातः व्यासङ्गादिनाऽकलितार्थस्य हठादाकलने सम्भ्रमातिशयमभिधत्ते ।

---

* [ सूत्रधारपारिपार्श्विकौ आकर्ण्य ] क्वचिदित्येव पाठः ।

† [ कीनाशतोरणनिभ्रूकायमानभीषण ] क्वचिदधिकपाठः ।

Swallowing us only with looking towards us.

भ्रूकुटिना दृष्टिपातेन आपिबन्निव नः सर्वान् सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत(१)एवाभिवर्त्तते तन्न युक्तमस्य पुरतः स्थातुम् (क) निष्क्रान्तौ (२) प्रस्तावना। (३)

ततः(४) प्रविशति सहदेवेनानुगम्यमानः क्रुद्धो भीमसेनः।

भीम। आः! पाप दुरात्मन्! वृथामङ्गलपाठक शैलूषापसद! लाक्षागृहेत्यादि पुनः पठति।

सह। सानुनयम्। आर्य्य! मर्षय मर्षय अनुमतमेव।

---

(१) इत एव इहैव अभिवर्त्तते आभिमुख्येन वर्त्तते आगन्तुमारभत इत्यर्थः।

(२) निष्क्रान्तौ सूत्रधारपारिपार्श्विकौ तयोरेव पूर्वं रङ्गे प्रविष्टत्वात्।

(३) प्रस्तावना आमुखं पूर्वरङ्ग इति यावत् "नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते। आमुखं तद्विजानीयात् बुधैः प्रस्तावनोच्यते"। इयञ्च प्रस्तावना कथोद्घातरूपा सूत्रधारवाक्यार्थमादाय भीमसेन पात्रस्य प्रवेशात् यथोक्तं दर्पणे "सूत्रधारस्य वाक्यं वा समादायार्थमेव वा। भवेत् पात्रप्रवेशश्चेत् कथोद्घातस्तदोच्यते" इति। अत्र सूत्रधारेण प्रबन्धप्रतिपाद्यार्थस्य संक्षेपेण सूचनेऽपि तद्वाक्यमन्यार्थपरतया सम्भाव्य भीमरूपपात्रस्य प्रवेश इति बोध्यम्।

(४) ततः, प्रवेशसूचनानन्तरम् "असूचितस्य पात्रस्य न च नाट्ये प्रवेशनम्" इत्युक्तेः अत्र प्रवेशनमित्युक्तेः पटीक्षेपेण स्वयं प्रवेशे तु न सूचनापेक्षेति सूचितम्।

---

(क) [ तदित आवामन्यत्र गच्छावः ] क्वचिदधिकपाठः।

नो भरतपुत्रस्यास्य वचनम्। पश्य [ निर्व्वाणवैरदहना इति पठित्वा अन्यथाऽभिनयति (१) ] (क)

भीम। सोपालम्भम्। न खलु (२) न खल्वमङ्गलानि चिन्तयितुमर्हन्ति भवन्तः कौरवाणां, सन्धेयास्ते भ्रातरो युष्माकम्।

सह। सरोषम्। आर्य्य!

धृतराष्ट्रस्य तनयान् कृतवैरान् पदे पदे (३)।
राजा न चेन्निषेद्धा स्यात् कः क्षमेत तवानुजः॥

भीम। सरोषम्। एवमिदम् अतएवाद्य प्रभृति भिन्नोऽहं भवद्भ्यः (४)। पश्य

(५)प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि
र्न तत्रार्य्यो हेतु र्न भवति किरीटी न च युवाम्।

---

(१) अन्यथा मरणार्थपरतया सभृत्याः कुरुराजसुताः क्षतजालङ्कृतभूमयः क्षतदेहा मृता भवन्त्वे तत्परतयेत्यर्थः। अभिनयति तथार्थबोधकशरीरचेष्टादिना व्यञ्जयति।

(२) न खलुशब्दोऽत्यन्तनिषेधवाची समुदितो निपातः।

(३) पदे पदे प्रतिस्थानं प्रतिविषयमिति यावत्।

(४) अत्र भेदः संहतिभेदनमिति दर्पणोक्तभेदाख्यं नाटकाङ्गम्।

(५) शिशोरेव शिशुकालमारभ्य सहजमिति यावत् कुरुभिः सह मम यद्वैरं प्रवृद्धमुपचितम्। तत्र तस्य हेतुर्निमित्तमार्य्यो न, युवां नकुलसहदेवौ तस्य हेतू न भवथ इति विपरिणामः। उर एव स्थलमाधारो

---

(क) [ यथार्थमेव क्षतजालङ्कृतवसुन्धराः क्षतशरीराश्च सभृत्याः कुरवः स्वर्गस्थाः भवन्त्विति जनीति ]

स्वराजाबंधता इत्यादिग्रन्थपाठस्तु स्फुटतादोषदूषितत्वादनादेयः।

जरासन्धस्योरःस्थलमिव विरूढ़ं पुनरपि
क्रुधा सन्धिं भीमो विघटयति यूयं घटयत ॥

सह । सानुनयम् । आर्य्य ! एवमतिसंभृतक्रोधेषु युष्मासु कदाचित् खिद्यते गुरुः ।

भीम । सहासम् । किं नाम मयि खिद्यते गुरुः ? सामर्षम् । गुरुः खेदमपि जानाति ? पश्य,

---

यस्य तस्युरःस्थानस्थमित्यर्थः । विरूढं प्रसवकालेऽजातं मातृभ्यां प्रसूत-देहार्द्धखण्डद्वयं प्रथमं वियुक्तमासीत् ततो जरया राक्षस्या संश्लेषणेन पुनः संयोजितमित्यर्थः । सन्धिं सन्धिस्थानमिव युष्माभिः क्रियमाणं सन्धिं पणविशेषं साकूत्यं च विघटयति वियोजयति अपाकरोतीति यावत् भ्रातृसाकूत्यभङ्गमाशङ्क्याह क्रुधेति वैरजातक्रोधेन, प्रागुक्तेन संहति-भेदेन च तत्र दोषं न गणये इति भावः । यूयमार्य्यादयः त्वदादिशेषः । पुनर्घटयत असम्भावितोत्पादनाय यतो हि घटना असम्भावितमपि तेषां सन्धिमुत्पादयितुं यतध्वं न तु सेत्स्यतीति भावः । अत्र युयज्ञ कुरुतेति पाठस्तु भग्नप्रक्रमदोषाघ्रातया दर्पणाद्यसम्मततया विवक्षि-तार्थाप्रतिपादकतया चोपेक्षितः । अत्र च महाभारतीया कथानुस-न्धेया सा च सभापर्वणि १६ अध्याये "अथ काले महाप्राज्ञ यथासम-यमागते प्रजायेतामुभे राजन् शरीरशकले तदा एकाक्षिबाहुचरणे अर्द्धो-दरमुखस्फिचे । इति ।--ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी । कर्त्तु-कामा सुखवहे शकले सा तु राक्षसी ॥ संयोजयामास तदा विधानबल-नोदिता । ते समानीतमात्रे तु शकले पुरुषर्षभ ॥ एकमूर्त्तिधरो वीरः कुमारः समपद्यत" । इत्युपक्रम्य राज्ञे तया ते दत्ते इत्यभिधाय "ज-रया सन्धितो यस्मात् जरासन्धो भवत्वयम्" इत्युक्तम् । तत्रैव २४अध्याये बभञ्ज पृष्ठं सङ्क्षिप्य निष्पिष्य च ननाद च । करे गृहीत्वा चरणं द्वेधा चक्रे महाबलः । इति द्वैधीकरणेन भीमेन हत इत्युक्तम् ।

(१)तथाभूतां दृष्ट्वा नृपसदसि पञ्चालतनयां,
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं,
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥

तत् सहदेव! निवर्त्तस्व, एवञ्च अतिचिरप्रवृद्धा-मर्षोद्दीपितस्य भीमस्य वचनात् विज्ञापय राजानम्।

सह। आर्य्य! किमिति।

भीम। एवं विज्ञापय।

---

(१) तथाभूतामननुभूतप्रकारां कृतकेशाम्बराकर्षणाम् ऋतुमतीमे-कवस्त्रां धर्षितामित्यर्थः अतिदुःखाकरस्य कथनेऽपि क्लेशदायित्वात्तथे-त्यनेन स्मारितमिति भावः। दृष्ट्वा प्रत्यक्षमुपलभ्य न तु श्रुत्वा, नृपसदसि नृपाणां सदसि न तु एकान्ते नाप्यन्येषां क्षुद्राणां समीपे स्वजाती-यानां, विशेषतः प्रधानानां, समक्षे अपमाननमतिदुःखकरमिति भावः। पञ्चालानां जनपदानां राजा तस्य तनयामित्यनेनाभिजात्यवचने-नापि दुःखकरत्वं द्योतितम्। एवं कलत्रगतं दुःखं दर्शयित्वा आत्मनि भ्रातृषु च तदाह वने इत्यादि वने न तु ग्रामे, व्याधैः सार्द्धं सह, अथ वा व्याधोपजीविकाधारिभिरस्माभिः सार्द्धम् एकत्वस्थतया सहितै-रुषितम् तत्रापि सुचिरम् नाल्पकालम्। व्याधैरित्यनेनाजीविकायां दुःखमभिधाय परिधाने तदाह वल्कलधरैरिति। अनुचितानां द्यूतस-हायतापाचकता स्त्रीनर्त्तनगवाश्वपालनादीनामारम्भैः अनुष्ठानेन निभृतं गुप्तं यथा स्यादेवं स्थितम्। खिन्ने अस्मत्भ्रातृक्लेशं दृष्ट्वा स्वय-मनुभूय खेदं प्राप्ते, मयीत्यनेन एवं क्लेशे युष्माकं खेदाभावेऽपि आत्मनोऽसहिष्णुत्वं द्योतितम्। गुरुः खेदम् मनस्तापम् भजति अ-द्यापि इदानीमपि कुरुषु एवं क्लेशदायिष्वपि नेत्यर्थः। तस्य च खेदाभि-भावे तेषु विषयेषु अवश्यमेव खेदः स्यात् अतः पूर्वं यदुक्तं गुरुः खेदमपि जानातीति तत् समर्थितमित्याशयः।

(१)युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं,
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवान्,
अद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥

इति साटोपम्(२)परिक्रामति ।

सह । तमेव अनुगच्छन् । आत्मगतम्(३) । अये ! कथमार्य्यः पाञ्चाल्यास्तुःशालं प्रविष्टः । भवतु तावत् अहमत्रैव तिष्ठामि । इति स्थितः ।

---

(१) नाम प्राकाश्ये, प्रकाशयामि यत् युष्मदाज्ञातिक्रमजले अन्तःप्रविष्टेन सता स्थितमिति । स्थितिमतां ज्येष्ठानुसरणरूपमर्य्यादावताम् द्वितीयं नाम सम्भावनायां, सम्भावयामि चात्मनो विगर्हणा अपीत्यत्रैवान्वयितव्यः निन्दापि प्राप्ता उपस्थितेति, अन्येषां भ्रातॄणामाज्ञानुसारित्वात् आत्मनस्तदतिक्रमान्निन्दा युक्तैवेति भावः उच्छिन्दतः समूलं नाशयतः अद्य संप्रतिकाले न त्वस्मिन्नहनि एकं दिवसं व्याप्य गुरुर्निवन्ता, उच्छेदनविषय इत्यर्थात् विधेयः नियम्यः । अत्र क्रोधोल्लासितेत्यनेनायुधान्तरापेक्षा नास्तीत्यस्य, उच्छिन्दत इत्यनेन समूलनाशनस्य, कौरवानित्यनेन सर्व्वेषाम्, अद्येत्यनेन एतावत्कालं प्रतिज्ञानुरोधेन सोढं नातःपरं सोढव्यमित्यस्य, एकं दिवसमित्यनेन एकाह्नैव कृतकृत्यतायाः, ममेत्यनेन सहायान्तरापेक्षा नास्तीत्यस्य, च सूचनादुत्साहातिशयो दर्शितः । अत्र कार्य्यस्य कौरवोच्छेदस्य हेतोर्गदासमुल्लासनस्य, अकार्य्यस्य च निन्दालाभहेतोर्गुरुशासनलङ्घनस्योक्तेः परिकरनामकसन्धिस्थानम् "कार्य्याकार्य्यस्य हेतूनामुक्तिः परिकरो मतः" इति भरतशास्त्रात् ।

(२) साटोपं साहङ्कारम् ।

(३) आत्मगतम् स्वगतम् "यत्तु श्रव्यं न सर्व्वस्य स्वगतं तदिहोच्यते" इति भरतवाक्यात् ।

भीम। परानिवृत्य अवलोक्य च। सहदेव! गच्छ त्वं गुरुमनुवर्त्तस्व, अहमप्यायुधागारं प्रविश्य आयुधसहायो भवामि।

सह। आर्य्य! नेदमायुधागारं पाञ्चाल्याश्चतुःशालमिदम्।

भीम। सवितर्कम्। किन्नाम नेदमायुधागारं, पाञ्चाल्याश्चतुःशालमिदम्। विचिन्त्य सहर्षम्। आमन्त्रयितव्या मया पाञ्चाली। सप्रणयम् सहदेवं हस्ते गृहीत्वा। वत्स! आगम्यताम्

I must address द्रौपदी at the time of bidding farewell to her; I must ask &c.

सह। यदादिशत्यार्य्यः।

भीम। वत्स! यदार्य्यः कुरुभिः सन्धानमिच्छन्नस्मान् (१) पीड़यति तद्भवानपि पश्यतु। परिक्रम्य। उभौ गृहप्रवेशं नाटयतः।

भीम। सक्रोधम्। भूमावुपविशति।

सह। ससंभ्रमम्। आर्य्य! इदमासनमास्तीर्णम् अत्रोपविश्य मुहूर्त्तम् चार्य्यः, पालयतु कृष्णागमनम्। द्रौपदी

Introduc-भीम। tion of speech वत्स, कृष्णागमनमित्यनेनोपोद्घातेन (२) तत् स्मृतम्, अद्य भगवान् कृष्णः केन प्रकारेण सन्धिं कर्त्तुं सुयोधनं प्रति प्रहितः।

---

(१) सन्धिकरणेनेत्यादिः तत्करणे तु द्रौपदीकेशसंयमनं न स्यादिति हृ नः पीड़ा।

(२) कृष्णाया द्रौपद्या आगमनमित्युक्तौ कृष्णस्यागमनमपि तस्यानुपूर्व्वीकपदप्रतिपाद्यतया स्मृतं तत्स्मृत्या च संबन्धिज्ञानस्य तदीयकार्य्यस्मरणहेतुतया तदीयकर्त्तव्यसन्धिविषयकस्मरणमिति द्योतयन्नाह उपोद्घातेनेति "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इत्युक्तत्वा

सह। आर्य्य, पञ्चभिर्ग्रामैः।

भीम। कर्णौ पिधाय। अहह! कथं तस्य देवस्याजातशत्रोरप्ययमीदृशस्तेजोऽपकर्ष इति यत् सत्यं कम्पितमिव मे हृदयम्। तद्वत्स! न त्वया कथितम् न च मया भीमेन। श्रुतम्। परिहृत्य स्थित्वा।

यत्तदूर्ज्जितमत्युग्रं चात्त्रं तेजोऽस्य भूपतेः।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम्॥

नेपथ्ये। समस्ससदु समस्ससदु भट्टिणी अवणइस्सदि दे मस्सुं णिच्चाणुबद्धकुलुवेरो कुमालो भीमसेणो (क)

सह। कर्णं दत्त्वा नेपथ्याभिमुखमवलोक्य, आत्मगतम्।

अये कथं याज्ञसेनी मुहुरुपचीयमानबाष्पपटलान्तरितनयना आर्य्यसमीपमुपसर्पति, तत् कष्टतरमापतितम्।

(१) यद्वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतम्।
तत् प्रावृडिव कृष्णेयं नूनं संवर्द्धयिष्यति॥

ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च।

द्रौप। सवाष्पं निश्वसिति।

---

प्रक्षतस्यैवानुकूलचिन्तयेत्यर्थः। कथोद्घातेनेति पाठे तु कथायाः कथान्तरस्य उद्घात उद्भेदो यस्मात् कथान्तरप्रसरणहेतुनानेनेत्यर्थः। तत्र हेतुस्तु तत्करणमित्याशयः।

(१) वैद्युतं विद्युत्प्रभवम् आर्य्ये भीमे संभृतं जातम् आर्य्यक्रोधेन सम्भृतमिति पाठस्तु दर्पणकृतोऽसम्मतत्वेनानादेयः इह "दिष्टनामकं लक्षणं देशकालस्वरूपे वर्णना दिष्टमुच्यते" इति दर्पणोक्तेः।

(क) समाश्वसितु, समाश्वसितु भट्टिनी अपनेष्यति ते मन्युं नित्यानुबद्धकुरुवैरः कुमारो भीमसेनः। इतराश्च भट्टिनीति चकारात् मद्विधयोरपि।

चेटि। समस्ससदु, समस्ससदु भट्टिणी अवणइस्सदि दे मसुं णिच्चाणुवद्धकुरुवेलो कुमालो भीमसेणो। (क)

द्रौप। हञ्जे बुद्धिमदिए! होदि एदं जइ महाराओ पड़िउलो ण भवे। (ख)

चेटी। विलोक्य। एसो कुमालो चिट्ठदि, ता णं उवसप्पदु-भट्टिणी (ग)

द्रौप। हञ्जे! एव्वं करेह्म। (घ) ]

---

[ ता णाधं पेक्खिदुं तुवरदि मे हिअअं ता आदेसेहि मे णाधस्स वासभवनम्। (क)

चेटी। एदु एदु भट्टिणी इति। (ख) परिक्रामतः।

चेटी। एदं वासभअणं ता प्पविसदु भट्टिणी। (ग)

द्रौप। हञ्जे! कधेहि नाधस्स मह आगमणं। (घ)

चेटी। जं भट्टिणी आणवेदि।

इति परिक्रम्योपसृत्य च।] इत्येव दाक्षिणात्यपुस्तके पाठः।

---

(क) समाश्वसिहीत्यादि प्राग्वत्।

(ख) हञ्जे बुद्धिमतिके! भवेत् एतत्, यदि महाराजः प्रतिकूलो न भवेत्। हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रतीत्यमरोक्तेः हञ्जे इति चेटीसम्बोधनसूचको निपातः।

(ग) एष कुमारस्तिष्ठति तदेनम् उपसर्पतु भट्टिनी।

(घ) हञ्जे एवं कुर्व्वः।

---

(क) तत् नाथं प्रेक्षितुं त्वरते मे हृदयं तदादेशय मे नाथस्य वासभवनम्।

(ख) एतु एतु भट्टिनी।

(ग) एतत् वासभवनं तत्प्रविशतु भट्टिनी।

(घ) कथय नाथस्य समागमनम्।

(ङ) यत् भट्टिनी आज्ञापयति

उभे प्रविशतः।

चेटी। जअदु जअदु कुमालो। (क)

भीम। अशृण्वन् सक्रोधम् यत्तद्वूर्जितमिति पुनः पठति।

चेटी। द्रौपदीमुपसृत्य। भट्टिणि! प्पिअं दे णिवेदेमि परिकुबिदो बिअ कुमालो लक्खीअदि। (ख)

द्रौप। हञ्जे! जइ एव्वं ता अवहीरणा वि एसा मं आस्सासअदि ज्जेब ता एत्थ उबबिट्टा भबिअ सुणोमि दाव णाहस्स व्ववसिदं। (ग)

इति तथा कुरुतः।

भीम। सक्रोधम्। सहदेवमधिकृत्य। किन्नाम पञ्चभिर्ग्रामैः सन्धिः?

(१) मथ्नामि कौरवशतं समरे न कोपात्?
दुःशासनस्य रुधिरं न पिबाम्युरस्तः?।

---

(१) मथ्नामीत्यादौ सर्व्वत्र भविष्यत्सामीप्ये लट्। मथिष्यामीत्याद्यर्थः गुरुशासनानुरोधेन कौरवशतमथनम् असंभावितं तच्च काकर्थकमञ्च त्वयेष व्यदस्यते। गुरुशासनानुरोधे हेतुः कोपादिति क्रुद्धस्य कार्य्याकार्य्यविवेकराहित्यं प्रसिद्धमितिभावः। आत्मनोऽधुना विधेयत्वाभावस्योक्ततया भवतां नृपतिरित्युक्तम्। अत्र च आनुषङ्गिकनृपकार्त्तव्यपणश्रवणात् नष्टस्येव स्वप्रतिज्ञातस्य वैरनिर्यातनवीजस्य कुरु-

---

(क) जयतु जयतु कुमारः। कुमारो युवराजः। *prince*

(ख) भट्टिनि, प्रियं ते निवेदयामि परिकुपित इव कुमारो लक्ष्यते।

(ग) हञ्जे, यद्येवं, तदवधीरणापि एषा मां समाश्वासयति, तदत्रोपविष्टा भूत्वा शृणोमि तावन्नाथस्य व्यवसितम्। व्यवसितमध्यवसायमुद्यममिति यावत्। *Resolue*

संचूर्णयामि गदया न सुयोधनोरू ?

सन्धिं करोतु भवतां नृपतिः पणेन ॥ agreement

द्रौप। सहर्षम्। जनान्तिकम्। (१) णाह ! अस्सुद पूव्वं एदिसं वअणं ता पुनोवि भणाहि (२)। (क)

भीम। सहदेव ! पश्य मथ्नामि कौरवशतमित्यादि पुनः पठति।

सह। आर्य्य ! किं महाराजस्य संदेशोऽयमव्युत्पन्न इव (३) गृहीतः।

भीम। का पुनस्तत्र व्युत्पत्तिः। (४)

सह। एवं गुरुणा संदिष्टम्।

भीम। कस्य।

---

मथनादेः प्रकाशनात् प्रतिमुखनामकसन्धिः यथोक्तं भरतेन "यातु-पङ्क्तिककार्य्येण क्रियते यत्प्रकाशनम्। नष्टस्येवेह वीजस्य सन्धिः प्रतिमुखं भवेत्" इति।

(१) जनान्तिकं रङ्गजनसमीपेऽन्योन्यमन्त्रणम् "अन्योन्यमन्त्रणं यत् स्यात् जनान्ते तत् जनान्तिकम्" इति भरतोक्तेः जनान्ते रङ्गदर्शकजन-समीपे न तु अभिनेयसमीप इत्यर्थः। दर्पणे तु त्रिपताककरेणान्यानप-वार्य्यान्तरा कथेति अधिकं पठित्वा यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्त-रत ऊर्द्ध्वं सर्व्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वान्येन सह यन्मन्त्र्यते तज्जनान्तिकमिति व्याख्यातम्।

(२) इह प्राप्तिनामकं सुखाङ्गं "प्राप्तिः सुखागम" इति दर्पणोक्तेः।

(३) अव्युत्पन्नः तात्पर्य्याविषयीभूतोऽर्थः पक्षपातमात्रविषय इत्यर्थः गृहीतः आपाततो ज्ञातः न तु तस्य पक्षपातमात्रपरता किन्तु अन्यार्थता स्फुटीभविष्यति चैतदुपरिष्टात्।

(४) का व्युत्पत्तिः तात्पर्य्येण कीदृशार्थपरता।

---

(क) नाथ, अश्रुतपूर्वमीदृशं वचनं, तत् पुनर्भण।

सह। सुयोधनस्य।

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम्। (१)
देहि मे चतुरो ग्रामान् पञ्चमं कञ्चिदेव तु।

---

(१) इन्द्रप्रस्थं खाण्डवप्रस्थस्यैव संज्ञान्तरम् आदिपर्व्वणि २०७ अध्याये "भ्रातृभिः सह कौन्तेय निबोध गदतो मम। पुनर्वो विग्रहो मा भूत् खाण्डवप्रस्थमाविश" इत्युपदिष्टैः हास्तिनपुरात् विवासितैस्तैरभिनवपुरमिन्द्रप्रस्थनामकतया निर्म्मितं यथोक्तं तत्रैवाध्यायशेषे "एवं संप्राप्य राज्यं तदिन्द्रप्रस्थं तपोधन" इति जनमेजयप्रश्नवाक्यम्। तथा चानेन हास्तिनपुरान्निर्वासनरूपापकारस्थानं स्मारितम्। वृको वृकोदरः उत्तरपदलोपः। वृको भस्मकीट उदरे यस्य स वृकोदरस्तत्संज्ञाप्राप्तिस्थानं वृकप्रस्थं तच्च प्रमाणकोटीस्थानमेव तत्रैव विषदानेन उन्मत्तीकृत्य स्थापिते भीमे दुर्य्योधनादिभिर्गङ्गाम्भसि निक्षिप्ते सति पातालगमनेन तत्र दशरसकुम्भान् पीतवति सति तेषामपि जारणात् वृकोदर इति संज्ञा विख्याता। आदिपर्व्वणि १२८ अध्याये एषा कथाऽनुसन्धेया। तत्स्थाननाम्ना च विषदानापकारस्मारणम्। जयन्तं द्यूतेन जयस्थानं तेन राज्यापहरणकलत्रधर्षणवनवासनाद्यपकारस्मारणम्। वारणावतम् जतुग्टहदाहनस्थानम् "पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम्" इत्युपक्रमय "स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना वारणावतमद्यैव यथा यासि तथा कुरु।--शणसर्ज्जरसादीनि यानि द्रव्याणि कानिचित् आग्नेयान्युत वा सन्ति तानि तत्र प्रदापयेति" आदिपर्व्वणि १४४ अध्याये। पुरोचनं प्रति दुर्य्योधनवाक्यम्। तेन अनलदाहस्मारणम्। एवं प्रतिपादननाम्ना तत्तदपकारं स्मारयित्वा पञ्चमं कञ्चिदेव त्वित्यनेन प्रार्थितः तस्यायमाशयः कञ्चिदेव ग्रामं यस्यैकदेशः ग्रामः सोऽपि ग्रामान्ततया ग्रामएव स च संग्रामएव तस्य ग्रामान्तत्वात्। अन्यस्य ग्रामान्तस्य निवारणाय पञ्चममिति विशेषणम्। पञ्च पञ्चत्वं भावप्रधान निर्द्देशः पञ्चानां भूतानां स्वस्वरूपापादकतया मरणमेव पञ्चत्वं तत् माति ददातीति पञ्चमं मरणदं मरणफलकव्यापारं यञ्जकमिति यावत् एवं संप्रा-

भीम। ततः किम्।

सह। तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्त्तनाद्विषभोजनजतुगृहद्यूतसभाद्यपकारस्यानोद्घाटनमेवेदं मन्यामहे।

भीम। साटोपम्। वत्स, एवं कृते किं कृतं भवति।

सह। आर्य्य! एवं कृते लोके तावत् स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं कुरुराजस्यासन्धेयता च दर्शिता भवति।

भीम। सर्वमप्येतदनर्थकं, कुरुषु तावदसन्धेयता तदैव निवेदिता यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञातं, प्रसिद्धश्च लोकेऽपि धार्त्तराष्ट्रकुलक्षयः।

सह। लज्जां नाटयति।

भीम। किं? लज्जाकरो भवताम्, अपि च रे मूर्ख!

युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणम्॥

द्रौप। जनान्तिकम्। णाह! ण लज्जन्ति एदे तुमं वि दाव मा विसुमरेहि। (क)

भीम। वत्स! कथं चिरयति पाञ्चाली, त्वरते मे मनः संग्रामावतरणाय।

---

सप्रार्थनया तेषामसन्धेयता दर्शितेति तात्पर्यार्थस्तदेवोत्तरत्र स्फुटीकरिष्यति।

---

(क) नाथ न लज्जन्ते एते त्वमपि तावत् मा विस्मार्षीः।

सह । आर्य्ये ! का खलु वेला (१) तत्रभवत्याः प्राप्तायाः, किन्तु रोषावेशवशादार्य्येण न लक्षिता ।

भीम । दृष्ट्वा । सादरम् । देवि ! समुद्धतामर्षैरस्माभिरागतापि भवती नोपलक्षिता अतो न मन्युं कर्त्तुमर्हसि ।

द्रौप । णाह ! उदासीणेसु तुह्मेसु मह मसु, ण उण कुविदेसु । (क)

भीम । यद्येवमपगतपरिभवमात्मानं समर्थयस्व ।

द्रौप । सखेदं निःश्वसिति ।

भीम । हस्ते गृहीत्वा, पार्श्वे समुपवेश्य, मुखमवलोक्य च । किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि ।

द्रौप । णाह ! किं पि उव्वेअकालणं तुह्मेसु सण्णिहिदेसु । ( ख )

भीम । किमिति नावेदयसि । केशानवलोक्य । अथ वा किमावेदितेन ।

जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेष्वपि ।
पञ्चालराजतनया वहते यदिमां दशाम् ॥

द्रौप । हञ्जे, बुद्धिमदिए ! णिवेदेहि दाव णाहस्स को

---

(१) का खलुवेला कियत्यपि वेला प्राप्ताया आगमनावधिः कियानपि कालो व्यतीत इत्यर्थः ।

---

(क) नाथ ! उदासीनेषु युष्मासु मन्युर्न पुनः कुपितेषु । मन्युः खेदः

(ख)नाथ ! किमप्युद्वेगकारणं युष्मासु सन्निहितेषु । अप्यर्थोऽत्र गम्यः ।

असो मह परिहवेण खिज्जइ। (क)

चेटी। जं देवी आणवेदि। भीममुपसृत्य। अञ्जलिं बद्ध्वा कुमाल! इदोवि अहिअं अज्ज मणुकालणम् आसी देवीए (ख)

भीम। किन्नामास्मादप्यधिकम् तत् कथय कथय।

(१) कौरव्यवंशदावेऽस्मिन् क एष शलभायते।
मुक्तवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव॥

चेटी। सुणादु कुमालो, अज्ज देवी अम्बासहिदा सुभद्दाप्पमुहेण सवत्तिवग्गेण परिविदा अज्जाए गान्धालीए पादवन्दणं कादुं गदा आसी। (ग)

भीम। युज्यते, यतोऽभिवन्दनीया गुरवः, ततस्ततः।

---

कौरव्यवंशोवंश इव मानसराजहंसवत् श्लिष्टवंशशब्दस्य द्विधाप्रतीति। तत्र दावे दावानलेऽस्मिन् मयीत्यर्थात्। मुक्तवेणीं मुक्तवेणां कृष्णां श्यामलां धूमशिखामिव मुक्तवेणीं मुक्तकेशरचनां कृष्णां द्रौपदीं स्पृशन् सन् समासान्तविधेरनित्यत्वात् मुक्तवेणीमित्यत्र न कप्। शलभायते पतङ्ग इवाचरति यथा वह्नौ पतङ्गस्य मृत्युरेवं तस्यापि स्यादिति भावः।

---

(क) हञ्जे बुद्धिमतिके! निवेदय तावन्नाथस्य, कोऽन्यो मम परिभवेन खिद्यते।

(ख) यत् देवी आज्ञापयति। कुमार! इतोऽप्यधिकमद्य मन्युकारणमासीद्देव्याः। इतः अनुभूयमानकेशसंयमनाभावरूपादस्मादित्यर्थः।

(ग) शृणोतु कुमारः, अद्य देवी अम्बासहिता सुभद्राप्रमुखेण सपत्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्त्तुं गता आसीत्।

चेटी । तदो पड़िनिवुत्तमाणा भाणुमदीए दिट्ठा । (क)

भीम । सक्रोधम् । आः ! शत्रोर्भार्य्यया दृष्टा । हन्त ! स्थानम् क्रोधस्य, साम्प्रतं देव्याः । ततस्ततः ।

चेटी । तदो ताए देवीं पेक्खिअ सहीवअण दिस-दिट्ठिए सगव्वं विहसिअ भणिदं । (ख)

भीम । न केवलं दृष्टा उक्ता च, अहो ! किं कुर्म्मः । ततस्ततः ।

चेटी । अइ जस्सेणि ! पञ्च गामा पत्थीअन्ति त्ति सुणी अदि ता कीस दाणीं बि दे केसा ण संजमीअन्ति (ग)

भीम । सहदेव ! श्रुतम् ।

सह । आर्य्य ! किमिहोच्यते (क) दुर्य्योधनकलत्रं हि सा, पश्य

स्त्रीणां हि साहचर्य्यात् भवन्ति चेतांसि भर्त्तृसदृशानि ।
मधुरापि हि मूर्च्छयते (१) विषविटपिसमाश्रिता वल्ली ॥

भीम । बुद्धिमतिके ! ततो देव्या किमभिहितम् ।

---

(१) मूर्च्छयते मुग्धं करोति अत्र तङ्चिन्त्यः ।

---

(क) [ उचितमेवैतत्तस्याः ] इति दर्पणेऽधिकः पाठः । अत्र दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनमिति दर्पणोक्त दृष्टान्तरूप लक्षणं नाम नाटकाङ्गम् ।

---

(क) ततः प्रतिनिवर्त्तमाना भानुमत्या दृष्टा ।

(ख) ततस्तया देवीं प्रेक्ष्य सखीवदनदत्तदृष्ट्या सगर्वं विहस्य भणितम् ।

(ग) अयि याज्ञसेनि ! पञ्च ग्रामाः प्रार्थ्यन्ते इति श्रूयते तत् कस्मादिदानीमपि ते केशा न संयम्यन्ते ।

चेटी। कुमाल! जइ परिजणहीणा भवे तदो देवी भणादि। (क)

भीम। किं पुनरभिहितं भवत्या।

चेटी। कुमाल! मए एव्वं भणिदं, अइ भानुमदि! तुह्माणं अमुक्केसु केसेसु कधम् अह्माणं देवीए केसा संजमीअन्ति त्ति। (ख)

भीम। सपरितोषम्। साधु बुद्धिमतिके! साधु, तदभिहितं यदस्मत् परिजनोचितम्।

आभरणानि बुद्धिमतिकायै प्रयच्छति। अधीरमासनादुत्तिष्ठन्।

अयि पञ्चालतनये! अलं विषादेन किं बहुना यत् करिष्ये तत् श्रूयताम् अचिरेणैव कालेन।

(१)चञ्चद्भुजभ्रमितचण्डगदाभिघात
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि
रुत्तंसयिष्यति कचांस्तव देवि! भीमः।

---

(१) चञ्चद्भ्यां चलद्भ्यां भुजाभ्यां भ्रमितया घूर्णितया गदया संचूर्णितमुरुयुगलं यस्य तादृशस्य, हननमात्रे वक्तुशोणिताभावात् संचूर्णितेत्युक्तम्। स्त्यानं स्तिमितं यथा तथा अवनद्धं संलग्नं यत् घनशोणितं सान्द्ररक्तं तेन शोणपाणिः सन् तव कचान् उत्तंसयिष्यति भूषयिष्यति उत्तम्भयिष्यतीति पाठे संयमयिष्यतीत्यर्थः अत्र "प्रतिक्रियान्वितं वाक्यं प्रतीकारः स उच्यते" इति भरतोक्तप्रतीकाराख्यं नाटकाङ्गम्। "परिन्यासस्तु कार्य्यस्य भाविनो निश्चयादयम्" इत्युक्तलक्षणं परिन्यासाख्यं मुखाङ्गम्।

(क) यदि परिजनहीना भवेत् तदा देवी भणति।

(ख) कुमार! मया एवं भणितम् अयि भानुमति! युष्माकममुक्तेषु केशेषु कथमस्माकं देव्याः केशाः संयम्यन्त इति।

द्रौप । किं णाह ! दुक्करं तुए परिकुविदेण अणुगेह्णन्तु एदं ववसिदं दे भादरो । (क)

सह । अनुगृहीतमेतदस्माभिः ।

नेपथ्ये महान् कलकलः । (१) ।

सर्वे सविस्मयमाकर्णयन्ति ।

भीम । (२)मन्थायस्तार्णवाम्भःप्लुतकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्ज्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुपतिनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसमो दुन्दुभिस्ताड्यतेऽयम् ।

प्रविश्य संभ्रान्तः कञ्चुकी । कुमार एष खलु भगवान् वसुदेवः ।

सर्वे कृताञ्जलयः समुत्तिष्ठन्ति ।

भीम । क्वासौ क्वासौ भगवान् ।

---

(१) अकस्मादुत्थितोऽव्यक्तः महान् शब्दः कलकलः ।

(२) मन्थेन मन्थनदण्डेन आयस्तं विक्षिप्तं चालितं यदर्णवस्याम्भस्तेन प्लुतं व्याप्तं कुहरं मध्यं यस्य तादृशस्य वलत स्खलतो मन्दरस्य तन्नाम-काचलस्य ध्वानइव धीरःगभीरः।"ढक्का शतसहस्राणि भेरिशतशतानि च।एकदा यत्र हन्यन्ते कोणाघातः स उच्यते" इति भरतोक्तलक्षणेषु कोणाघातेषु सत्सु गर्ज्जतां प्रलयकालिकघनानां घटायाः समूहस्य अन्योन्यसंघट्टः परस्पर संघर्षणं तज्जातशब्द इव चण्डः भैरवः । कृष्णाया द्रौपद्याः कालरात्रेर्वा क्रोधस्याग्रदूतः आगमनसूचकोऽग्रगामी दूतः नकीवदिति प्रसिद्धः। कुरुपतिनिधनस्योत्पात सूचकः निर्घातवातः प्रचण्डानिलः ।

---

(क) किं नाथ ! दुष्करं त्वया परिकुपितेन अनुगृह्णन्तु एतत्व्यवसितं ते भ्रातरः । गुणाख्यानं विलोभनमितिदर्पणोक्तम् विलोभाख्यं मुखाङ्गम् ।

कञ्चु। पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्धः।

सर्वे संभ्रमं नाटयन्ति।

भीम। किं संयतः।

कञ्चु। नहि नहि संयमितुमारब्धः।

भीम। किं कृतं देवेन।

कञ्चु। ततः स महात्मा दर्शितविश्वरूपतेजःसम्पातमूर्च्छितमवधूय कुरुकुलम्, अस्मच्छिबिरसन्निवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति।

भीम। सोपहासम्। किं नाम दुरात्मा सुयोधनो भगवन्तं संयमितुमिच्छति।

आकाशे दत्तदृष्टिः। आः दुरात्मन्! कुरुकुलपांसुल! एवमतिक्रान्तमर्य्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन (१) भवितव्यम्।

सह। आर्य्य! किमसौ दुरात्मा सुयोधनो वासुदेवमपि भगवन्तं स्वेन रूपेण न जानाति।

भीम। वत्स मूढ़ः खल्वयं दुरात्मा कथं जानातु। पश्य (२)आत्मारामा विहितरतयो निर्व्विकल्पे समाधौ।

---

(१) भगवदवमाननार्जितदुरितैर्वाचिरादेव नाशोभावीत्याशयः।

(१) आत्मा आरामसदृवनमिवानन्दस्याभत्वात् तस्मिन् आसमन्तात् विहिता रतिरनुरागो यैः ते आत्मोपवनसमन्तात् कृतानुरागा योगिनइत्यर्थः अथ वा आत्मनि आरमन्ते इत्यात्मारामाः, विहिते विशिष्टहिते मोक्षसाधने एव रतिरनुरागो येषामिति पदद्वयस्य आत्मन्येवाभिरता मुमुक्षवश्चेत्यर्थः अनेन रजोगुणकर्म्मैषयिक रागराहित्यमुक्तम् ज्ञानोद्रेकात् ज्ञानहेतुभूत-

ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥

सत्त्वांशविशेषस्य उद्रेकात् रजस्तमोभ्यामनभिवादाधिक्येन प्रकाशनात् विघटिता विनाशितास्तमसां ग्रन्थयः संशयविपर्य्यादयो येषां ते "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" इति श्रुतौ परमात्मज्ञानस्य सर्व्वसंशयनिवारकतायाः उक्तेस्तदेकवाक्यत्वात्तथैव तमोग्रन्थिशब्दार्थोऽवसेयः । सत्त्वे सत्त्वधर्म्मेषु मैत्रीकरुणामुदितादिषु निष्ठा निःशेषेण स्थितिर्येषां ते अथ वा विषयरागशून्यत्वात् सर्वतामसनाशनाच्च विशुद्धसत्त्वप्रधाना इत्यर्थः। निर्विकल्पे कल्पनारहिते मितिमेयमात्रादिभेदशून्ये असंप्रज्ञातनामके योगशास्त्रप्रसिद्धे समाधौ ध्यानविशेषे तमसां तमः कार्य्याणां ज्योतिषां सत्त्वगुणानां तत्कार्य्याणां, वा ऽनुक्तसमुच्चयार्थे "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति कोषात् । अनुक्तानां रजसां च परस्तात् काले प्रलयादौ देशे वा "पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवी"तिश्रुतौ कार्य्यातीतत्वमुक्तम् तत्र वर्त्तमानं त्रिगुणातीत स्थानस्थमित्यर्थः परस्तादिति दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः (५. ३, २७, पा०सू० ) सप्तम्यर्थे अस्तातिः तस्य चातसर्थतया षष्ठ्यतसर्थेत्यादिना (२, ३,३०,पा०सू०) तमसामित्यादौ तद्योगे षष्ठी। तस्य च दिग्देशकालवृत्तिविषयत्वनियमेन परस्तात् परमिति द्वितीयान्तपरतया व्याख्यानमप व्याख्यानमेव अस्तातेः प्रथमापञ्चमीसप्तमीभिन्नविभक्तौ अननुशासनात् । यं कमपि इदं त्वया निर्व्वक्तुमशक्यत्वेन अनिर्वचनीयं तच्च तन्नेति सर्वनिषेधे परिशिष्यमाणमित्यर्थः । वीक्षन्ते साक्षात् कुर्व्वन्ति। तं परात्मानममुं पूर्वप्रस्तावितं वासुदेवं देवं द्योतनशीलं पुराणं पुरापि नवं कूटस्थं नित्यमपरिणामिनं मोहान्धः मोहेनान्धइवान्धः ज्ञानशक्तिरहितः मोहात्मेति पाठे तु मुह्यतीति मोहः पचाद्यच् मोहः मुग्ध आत्मा अन्तःकरणं, यस्य तादृशः अयं दुर्य्योधनः कथं वेत्ति जानाति वेदनसामग्र्यभावात् न कथमपीत्यर्थः। वेत्त्विति पाठे संभावनायां लोट ।

आर्य्य मैत्रेय! किमिदानीमध्यवस्यन्ति(१)गुरवः।

कञ्चु। स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः। इति निष्क्रान्तः।

नेपथ्ये कलकलानन्तरम्। भो भो! द्रुपदविराटवृष्णान्धकसहदेवप्रभृतयः अस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च शृण्वन्तु भवन्तः।

(२)यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते॥

---

(१) अध्यवस्यन्ति कुर्वन्ति अध्यवसायश्चेह उद्यमविशेषः।
(२)सत्यमेव व्रतं तस्य भङ्गात् भीरुमनसा सत्यभङ्गे यः सत्यभङ्गस्तद्भीतेनेत्यर्थः यत्नेन क्रोधावेशनिवारणस्य दुस्करतया यत्नातिशयेनेत्यर्थः। मन्दीकृतं वेगराहित्येन स्थगितमिवाप्रचारित व्यापारीकृतमित्यर्थः शमवता शान्तिप्रधानेन कुलस्य शान्तिमविनाशरूपोपप्लवराहित्यम्। द्यूतमरणिर्वह्निमन्थनकाष्ठविशेष इव तेन संभृतमुत्पादितं नृपस्य राज्ञो द्रुपदस्य सुता द्रौपदी तस्याः केशेष्वम्बरेच चाकर्षणानि तैर्महत् बहुलीभूतम् कुरूणां जनपदानां राजानः कुरवः तद्राजार्थकतद्धितलुपि सिद्धम् ते वनमिव दाह्यत्वात् तस्मिन् यौधिष्ठिरं क्रोधज्योतिः क्रोधोज्योतिरिव जृम्भते वेगवत्तया व्यापारान्वितं सत् संप्रकाशते इत्यर्थः। अत्र क्रोधज्योतिरित्यादौ उपमितसमास एव ग्राह्यः रूपकसमासे त्विस्मरणकेशाम्बराकर्षणकृतमहत्त्वयोज्योतिषोऽसंबन्धादनन्वयापत्तेः। इह स्वस्था भवन्तु मयीत्यादिना बीजस्य प्रधाननायकाभिमतत्वेन समग्रगाधानात् समाधाननामकं नाटकाङ्गं यथोक्तं दर्पणे बीजस्यागमनं यत्तु तत्समाधानमुच्यते इति।

भीम। आकर्ण्य सहर्षामर्षम्। जृम्भतां जृम्भतामप्रतिहत-प्रसरमार्य्यस्य क्रोधज्योतिः।　　पुनर्नेपथ्ये कलकलः।

वक्र। सविस्मयम्। णाह! किं दाणीं एसो [ ] पल अजलहरघणत्थणिदमंसलो(१)क्खणे क्खणे समर दुन्धुही ताड़ीअदि।(क)

भीम। देवि! किमन्यत् यज्ञः प्रवर्त्तते।

द्रौप। सविस्मयम्। को एसो जण्णो।(ख)

भीम। रणयज्ञः, तथाहि।

(२)चत्वारोवयमृत्विजः, स भगवान् कर्म्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।

---

(१) घनस्तनितं निरन्तरगर्ज्जितं तदिव मांसलः गभीर इत्यर्थः इह विद्रवाख्यो गर्भसन्धिः यथोक्तं भरतेन "शङ्काकलङ्क प्रभवः संभ्रमो विद्रवोमत" इति।

(२) वयं त्वदादिशेषे भीमादयः ऋत्विजः ऋत्विजामिव पशु मारणाहुतिरूपहेति प्रक्षेपादिना ऋत्विक्त्वमस्माकम् तथा ऋत्विक् क्षतयज्ञ-फलस्य यजमाने इवास्मत्कृतरणयज्ञजयस्य राजन्येव भविष्यतीत्यपि ऋत्विक्त्वारोपेण सूचितम्। कर्म्मोपदेष्टा आचार्य्यः उपदेशसाधर्म्यात्

---

(क) नाथ! किमिदानीम् एष प्रलयजलधरघनस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते। युद्धं स्यान्नवेति संशयाना तूर्य्यरवानन्तरं कुतूहलितया जिज्ञासनात् परिभावनानामकं नाटकाङ्गं यथोक्तं दर्पणे "कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावने"ति।

(ख) क एष यज्ञः।

---

[ चण्डघोसदालुणो ] इत्यधिक पाठः।

[ चण्डघोषदारुणः ]

कौरव्याः पशवः, प्रियापरिभवक्लेशोपशान्तिः फलं,
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः॥

सह। आर्य्य! गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम्।

भीम। वत्स! एते वयमुद्यता एवार्य्यस्यानुज्ञामनुष्ठातुम्। उत्थाय। देवि! गच्छामो वयमिदानीं कुरुकुलक्षयाय।(१)

द्रौप। वाष्पं धारयन्ती। णाह! असुरसमराहिमुहस्स हरिणो विअ मङ्गलं तुह्माणं होदु [। (क)

चेटी। अस्सं च देवी भणादि। णाह! तुह्मे हिं पुणोवि समरादो आअच्छिअ अहं आस्सासइदव्वा। (ख)

ध्याचार्य्यत्वम्। संग्रामएवाध्वरोयज्ञस्तत्र दीक्षितः दीक्षा यज्ञाङ्गव्रतविशेषो जातास्येति दीक्षितः कृतसंकल्पव्रतमात्रकारित्वमेव तस्यास्माभिरेव सर्व्वकार्य्यस्य करणान्न कृत्यान्तरे तस्य स्वयंकर्त्तृतेति भावः। पत्नी गृहीतव्रता केशसंस्कारादिराहित्यमेवेह सामग्रात् यज्ञाङ्गव्रतं तद् गृहीतं ययेति विग्रहः। कौरव्याःकुरुषु भवाः कुर्वनादिभ्योण्यः (४, १, १७२, पा० सू०) ण्याः। तएव पशवः वध्यत्वात्। राजन्योपनिमन्त्रणाय क्षत्रियमात्राह्वानाय यशःप्रख्यापकोदुन्दुभिःयशोदुन्दुभिर्वाद्यभेदः स्फीतं उच्चैर्यथा तथा रसति शब्दायते। अत्र उद्भेदनामा मुखसन्धिः यथोक्तं भरतेन "बीजप्ररोह उद्भेद यत्किञ्चित्प्रभवात्मक" इति।

(१) अत्र कारणनामा मुखसन्धिः "उद्यमः प्रस्तुतार्थस्य कारणं परिकीर्त्तित"मिति भरतवाक्यात्।

(क) नाथ! असुरसमराभिमुखस्य हरेरिव मङ्गलं युष्माकं भवतु।

(ख) अन्यच्च देवी भणति, नाथ, युष्माभिः समरादागत्य अहमाश्वासयितव्या।

क[ जं च अम्बाकुन्दी आसासदि तद् तुह्माणं होदु।]
यच्च अम्बा कुन्ती आशास्ते तत् युष्माकं भवतु।

भीम। देवि! किमलीकाश्वासनेन।

(१) भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।

अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥

द्रौप। णाह! मा क्खु, मा क्खु, जस्रसेणीपरिहरबुद्दीबिदकोबाणला अणपेक्खिदसरीरा संचरिस्सध जदो अप्पमत्तसंचरणिज्जाइं रिउबलाइं सुणीअन्ति। (क)

भीम। अयि सुक्षत्रिये, समर्था वयमस्मिन् रणे परिक्रमितुम्। शृणु।

(२) अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ।

---

(१) भूयान् बहुलो यः पराभवस्तेन या क्लान्तिर्लज्जा च ताभ्यां विधुरितं बन्धुरितेति पाठे व्याप्तम् आननं वदनं, यस्य तम् अथवा भूय इति न पश्यसीति क्रियाविशेषणम् भविष्यत्सामीप्ये लट् न द्रक्ष्यसीत्यर्थः।

(२) आस्फालनं संघर्षणं भिन्नो विदारितः। वसा हृन्मेदः चरवीति प्रसिद्धं मस्तिष्कं क्लोमं शिरस्थघृताकारद्रव्यविशेषः तान्येव पङ्कस्तस्मिन् मग्नानां स्यन्दनानामुपरि यः पदन्यासः स एव विक्रान्तपत्तिर्विक्रमशालिसेना यत्र तादृशे, स्फीतासृजः प्रवाहेन स्रुतरुधिरस्य पानगोष्ठ्यां पानार्थसजातीयसभायां रसन्त्यः शब्दायमानाः अशिवाः अमङ्गलसूचिका याः शिवाः शृगालिकास्ता एव तूर्यौ मर्द्दलनामवाद्यं तेन नृत्यन् कबन्धोऽशिरस्ककलेवरं यत्र तादृशे, संग्रामैकार्णवान्तः पयसि, एकार्णवः प्रलयार्णवः तत्रैव समुद्राणां जलप्लवेनैकरूपतापत्तेः संग्रामः

---

(क) मा खलु मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनपेक्षितशरीराः सञ्चरिष्यथ, यतोऽप्रमत्तसञ्चरणीयानि रिपुबलानि श्रूयन्ते।

स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्य्यनृत्यत्कबन्धे
संग्रामैकार्णवान्तः पयसि विचरितुं पण्डिताः पाण्डुपुत्राः ।

इति निष्क्रान्ताः (१) सर्वे ।

प्रथमोऽङ्कः ।

---

एकार्णवान्तः पय इव गाम्भीर्य्येण दुस्तरत्वेन च संग्रामस्य तत्साहृश्यम् तत्र पाण्डुपुत्राः। सञ्चरितुं पण्डिताः इत्यर्थः । संग्रामेत्यादावुपमित-समासात्पूर्वोक्तविशेषणद्वयसङ्गतिः रूपकसमासे तदसङ्गतिरिति बोध्यम् ।

(१) पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गम इत्युक्तेः प्रविष्टपात्राणामङ्कशेषे निष्क्रान्तेरावश्यकत्वान्निष्क्रान्ता इत्युक्तम् ।

इति श्रीतारानाथ तर्कवाचस्पति भट्टाचार्य्य
विरचिते वेणीसंहारनाटक—
व्याख्याने प्रथमाङ्कः ।

# अथ द्वितीयोऽङ्कः।

ततः प्रविशति कञ्चुकी।

कञ्चु। आज्ञापितोऽस्मि(१)महाराजदुर्य्योधनेन—विनयन्धर, गच्छ त्वमन्विष्यतां(२)देवी भानुमती, अपि(३)निवृत्ता अम्बायाः पादवन्दनसमयान्न वेति, यतस्तां विलोक्य निहताभिमन्यवो राधेयजयद्रथप्रभृतयः क्षत्रियाः समरभूमिं गत्वा सभाजयितव्याः(४)इति, तन्मया द्रुततरं गन्तव्यमिति, अहो प्रभविष्णुता(५) महाराजस्य, यन्मम जरसाभिभूतस्य मर्य्यादामात्रमेवावरोधव्यापारः (६) अथ वा किमिति जरामुपालभामहे यतः सर्वान्तःपुरिकाणामयमेव व्यवहारिको वेष श्चेष्टा च (७) तथाहि,

---

(१) आज्ञापितोऽस्मीत्यस्य सभाजयितव्या इतीत्यनेनान्वयः।

(२) अन्विष्यताम् अनुसन्धीयताम्।

(३) अपिः प्रश्ने।

(४) सभाजयितव्याः सम्मानपूर्व्वकमभिनन्दनीयाः।

(५) प्रभविष्णुता प्रभावशालिता यद्बलादसमर्थस्य जरयाभिभूतस्यापि मम अवरोधव्यापारस्तद्रक्षित्वमिति भावः।

(६) अवरोधव्यापारः अन्तःपुरकर्मकरणं जरसाभिभूतस्य कर्म्माक्षमत्वेऽपि प्रभोराज्ञयैव मर्य्यादाहेतुना सर्वकर्मनिर्वाह इति भावः।

(७) सर्वान्तःपुरिकाणामन्तःपुरेऽधिकृतानां सर्वेषामेव व्यवहारिकस्तत्रत्यव्यवहारयोग्यः अयं मदीयवेशप्रायो वेषः चेष्टा च मद्विधैव। तथा चान्तःपुरेऽधिकृतैर्मद्विधवेषचेष्टावद्भिर्भवितव्यमन्यथा स्त्रीदूषणादिशङ्कया ततोऽपसारणं क्रियेतेति भावः।

(१) नीचैः सत्यपि चक्षुषीक्षितुमलं श्रुत्वापि नाकर्णितं
शक्तेनाप्यधिकार इत्यधिकृता यष्टिः समालम्ब्यते ।
सर्व्वत्र स्खलितेषु दत्तमनसा यातं मया नोद्धतं,
सेवास्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम् ॥

परिक्रम्य दृष्ट्वा आकाशे । (२) विहङ्गिके ! अपि श्वश्रूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती । कर्णं दत्त्वा । किं कथयसि, आर्य्ये ! एषा भानुमती देवी पत्युः समरविजयाशंसया निर्वर्त्तितगुरुपादवन्दनाऽद्य प्रभृत्यारब्धनियमा

---

(१) स्वानुभूतवेषचेष्टादिवर्णनेनान्तःपुरोपयोगिवेषचेष्टादिकं दर्शयति नयाहीत्यादि चक्षुषि सत्यपि उच्चैरूर्द्ध्वमीक्षितुं नालं न पर्य्याप्तः तथा चान्तःपुराधिकारिणा अधोनयनेन भवितव्यमिति दर्शितम् । एवं श्रुत्वापि नाकर्णितं श्रुतवताप्यश्रुतवतेव व्यवहर्त्तव्यमिति भावः । यष्टिं विना गन्तुं शक्तेनापि अधिकृता मया यष्टिरवलम्ब्यते अशक्तत्वख्यापनार्थं न त्वालम्बनार्थं तथा च गमनशक्तिमतापि तदशक्तत्वख्यापनाय यष्टिमवलम्ब्यैव गन्तव्यमिति भावः । अधिकार इति कञ्चुकिनो यष्टिधारणमवश्यं कर्त्तव्यमितिहेतोः यष्ट्यवलम्बनमित्यपि सूचितम् । किञ्च सर्व्वत्र सर्व्वस्थानेषु स्खलितेषु प्रच्युतेषु पतनसूचनव्यापारेषु दत्तमनसा कृतधिया उद्धतमुत्कटं न यातं गन्तुं समर्थेनापि तथागमने पतितःस्यामिति सूचनार्थमेव नोद्धतगमनं कृतमिति भावः । तथा च यदेतत् मे मम कर्म्म तत् किं नाम जरसा कृतमपि तु नैवेत्यर्थः तच्च विशेषणेन सूचयति सेवेत्यादि सेवया स्वीकृतमायत्तीकृतं जीवितमायुः कालो यस्य तस्य मम सेवावशंवदतया धनाशयैव तथा कृतं न तु जरया । एवञ्च जरोपालम्भोऽर्थः धनाशैवोपलब्धव्येति निर्गलितार्थः ।

('२) "दूरस्थाभाषणं यत् स्यादशरीरनिवेदनम् । परोक्षान्तरितं वाक्यं तदाकाशे निगद्यते" इति भरतवाक्यात् विहङ्गिकां तन्नामिकां परिचारिकां दूरस्थां सम्बोध्य वदतीति शेषः ।

बालोद्याने तिष्ठतीति । तद्भद्रे ! गच्छ त्वमात्मव्यापाराय यावदहमप्यत्रस्थां देवीं महाराजस्य निवेदयामीति । परिक्रम्य । साधु पतिव्रते साधु, स्त्रीस्वभावे वर्त्तमाना वरं (१) भवती, न पुन र्महाराजः, योऽयमुद्यतेषु बलवत्स्व-बलवत्सु वा वासुदेवसहायेषु पाण्डुपुत्रेष्वरिषु च अद्या-प्यन्तःपुरविहारमनुभवति ।

विचिन्त्य । इदमयथातथं (२) स्वामिनश्चेष्टितम्, कुतः,

(३) आग्रस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने
स्तापायास्य न पाण्डुसूनुभिरियं भीष्मः शरैः शायितः ।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्बधात् ॥

---

(१) वरं मनागभीष्टा "मनागिष्टे वरं यत्तु कश्चिदाह तदव्ययमि"ति कोषः ।

(२) अयथातथमनर्हम् ।

(३) शस्त्रग्रहणमारभ्याकुण्ठपरशोरनभिभूतपरशुशस्त्रस्य तस्य प्रसिद्धस्य परशुरामस्य जेता "उद्योगपर्वणि अम्बोपाख्याने १८६ अध्याये "जितोऽस्मि भीष्मेति सुमन्दबुद्धि" रित्यन्ता सा कथाऽनुसन्धेया । सः शरैः शायितः अस्य राज्ञः तापाय न । प्रौढाः प्रगल्भाः ये अनेके धनुर्धरा महारथा एवारयस्तेषां विजयेन श्रान्तस्य एकाकिनोऽसहायस्य द्रोणकृतव्यूहमध्ये कस्यापि प्रवेशाभावात् बालस्याल्पवयस्कस्य अरातिलूनधनुषः समासान्तविधेरनित्यत्वान्नानङादेशः । धनुर्हीनस्येत्यनेन सुजेयत्वोक्त्या हर्षस्थानाभावेऽपि हर्षस्थानत्वेनोद्भावनमयथातथमिति भावः अभिमन्युबधकथा च "एवं विनिहतो राजन् ! एको बहुभिराहवे" क्षोभयित्वा चमूं सर्वा" मित्यन्ता द्रोणपर्वणि ४९ अध्याये अनुसन्धेया । "विष्कम्भकाद्यैरपि नो बधो वाच्योऽधिकारिणः" इति दर्पणेऽधिकारिण एव विष्कम्भके वधवर्णननिषेधो न तु सेनापत्यानामिति तद्वर्णनेऽपि न क्षतिः ।

सर्वथा दैवतं नः स्वस्ति करिष्यतीति, यावद्-( १ ) तस्यां देवीं महाराजस्य निवेदयामीति निष्क्रान्तः। विष्कम्भकः २

ततः प्रविशत्यासनस्था देवी भानुमती सखी चेटी च।

सखी। सहि भाणुमदि! कीस दाणीं तुमं सिविणअदंसणमेत्तस्स किदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एव्वं विअलिअधीरभावा अतिमेत्तं संतप्पसि। ( क )

चेटी। भट्टिणि! सोहणं भणादि सुवअणा सिविणन्तो जणो किं ण क्खु प्पलवदि। ( ख )

भानु। हञ्जे! एव्वं णेदं मम उण अकुसलदंसणं पड़िभादि सिविणअम्। ( ग )

---

( १ ) नियमार्थं वाक्योऽयमस्यामस्याम्।

( २ ) "वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः" इति दर्पणकारः। अत्र च वृत्तयोः भीष्मवधाभिमन्युवधयोर्वर्त्तिष्यमाणस्यान्तः पुरविहारस्य च सूचनात् विष्कम्भकत्वमिति बोध्यम्।

---

( क ) सखि भानुमति! कस्मादिदानीं त्वं स्वप्नदर्शनमात्रस्य कृते अभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वा एवं विगलितधीरभावा अतिमात्रं सन्तप्यसे।

( ख ) भट्टिनि! शोभनं भणति सुवदना स्वपन् जनो किं न खलु प्रलपति।

( ग ) हञ्जे! एवं न्विदम्, मम पुनरकुशलदर्शनं प्रतिभाति स्वप्नदर्शनम्।

सखी । पिअसहि ! जइ एव्वं ता कधेहि सिविणअं जं अह्मे वि पड़िट्ठावअन्तीओ धम्मप्पसंसाए देवदाणं संकीत्तणेण [ दूब्बादि ] पडिग्गहेण अ पडिहड़िस्सामो । (क)

चेटी । सोहणं क्खु भणादि सुवअणा अकुसल दंसणा वि सिविणआ देवदाणं प्पसंसाए कुसलपरिणामा होन्ति त्ति सुणीअदि । (ख)

भानु । जइ एव्वं ता कहइस्सं अवहिदा दाव होहि (ग)

सखी । अवहिदह्मि कहेदु पिअसही । (घ)

भानु । हला ! भएण विसुमरिदह्मि ता चिट्ठ जाव सव्वं सुमरिअ कहइस्सं (ङ) । इति चिन्तां नाटयति ।

ततः प्रविशति दुर्य्योधनः कञ्चुकी च ।

दुर्यो । सूक्तमिदं कस्यचित् ।

---

(क) प्रियसखि ! यद्येवं तत् कथय स्वप्नं यद्वयमपि प्रतिष्ठापयन्त्यः धर्मप्रशंसया देवानां सङ्कीर्त्तनेन दूर्वादिपरिग्रहेण च परिहरिष्यामः । यथार्थशान्त्ययापरतया स्थापनं प्रतिष्ठापनम् तत् कुर्वन्त्यः शुभार्थतया संपादयन्त्य इत्यर्थः ।

(ख) शोभनं खलु भणति सुवदना, अकुशलदर्शनाः अपि स्वप्नाः देवानां प्रशंसया कुशलपरिणामा भवन्तीति श्रूयते ।

(ग) यद्येवं तत् कथयिष्ये अवहिता तावद्भव ।

(घ) अवहितास्मि कथयतु प्रियसखी ।

(ङ) सखि ! भयेन विस्मृतास्मि तत्तिष्ठ यावत् सर्वं स्मृत्वा कथयिष्ये

---

क [ दुजादिपडिग्गहेण ]

द्विजातिसंप्रदानकप्रतिग्रहेणेत्यर्थः ।

(१) गुप्तया साक्षान्महानल्पः स्वयमन्येन वा कृतः।
करोति महतीं प्रीतिमपकारोऽपकारिषु॥

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्योच्छ्वसितमिव (२) नश्चेतसा।

कञ्चु। देव! नेदमतिदुष्करमाचार्य्यशस्त्रप्रभावाणाम् (३) कर्णजयद्रथयोर्व्वा कात्र श्लाघा।

राजा। विनयन्धर! किमाह भवान्। एकाकी (४) बहुभिर्बालो लूनशरासनश्च निहत इति। पश्य

(५) हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति॥

---

(१) अपकारिषु शत्रुषु गुप्तया गोपनेन साक्षात् प्रत्यक्षेण स्वयमात्मना अन्येन कृतोऽल्पोऽप्यपकारः प्रीतिं करोतीत्यन्वयः।

(२) प्रीत्या दीर्घनिःश्वासो हि उच्छ्वास इह तु चेतसः प्रीत्याश्रयत्वेन स्फूर्त्तिमात्रे उपचरितम्।

(३) आचार्य्यात् शिक्षितशस्त्राणां प्रभावो महाराजस्येत्यर्थात् तस्मिन्नेवेदं सम्पन्नं न त्वन्यस्य कस्याप्यत्र श्लाघेति कञ्चुकिनोऽभिप्रायः।

(४) कात्र श्लाघेति शब्दश्रवणमात्रेणैवान्यार्थपरकञ्चुकिवाक्यस्य स्वपक्षीयकृतानर्हकर्म्मपरत्वेन निन्दापरत्वमुत्प्रेक्ष्याह एकाकीत्यादि कृतापराधस्य सर्व्वमेव वाक्यं स्वकृतापराधसूचकं भवतीति लोकप्रसिद्धं यथा गृहे कोऽस्तीत्युक्तौ दधिभोजनरूपापराधवतः 'न मया दधि भुज्यते इत्या' इत्युक्तिस्तद्वदत्राऽपीति भावः।

(५) जरति वृद्धे गाङ्गेये भीष्मे शिखण्डिनं द्रुपदपुत्रं पुरस्कृत्य अग्रे निधाय हते पाण्डुपुत्रैरित्यर्थात्। शिखण्डिपुरोनिधानपूर्व्वकं वृद्धस्य, छिन्नधनुषो बालस्य च हनने तुल्ये श्लाघाश्लाघे इति भावः। अत्र लेशाख्यं नाटकाङ्गं यथोक्तं दर्पणे। स लेशो भण्यते वाक्यं यत् सादृश्यपुरःसर-

कञ्चु। सवैलक्ष्यम्। देव! नैवेदं कल्पयितु (१) मर्हसि यतस्तव पौरुषप्रतीघातो (२) ऽस्माभिर्नावलोकितपूर्व्व इत्यत एव विज्ञापयामि।

राजा। एवमिदम्।

(३) सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम्॥

कञ्चु। कर्णौ पिधाय सभयम्। शान्तं पापं प्रति हतममङ्गलम्।

राजा। विनयन्धर! किं मयोक्तम्।

कञ्चु। सहभृत्यगणमित्यादि (४) पठित्वा। एतद्विपरीतमभिहितं देवेन।

---

मिति। शिखण्डिपुरोधानेन भीष्मवधकथा च भीष्मपर्व्वणि १२० अध्यायेऽनुसन्धेया।

(१) कल्पयितुम् अन्यपरवाक्यस्य अन्यपरत्वमुत्प्रेक्षितुम्।

(२) द्रोणाचार्य्यशिक्षितशस्त्रप्रभावादिमद्भिः प्रतीघातः कार्य्यसाधनत्वव्याघातः।

(३) पौरुषप्रतीघाताभावेन कञ्चुकिना प्रशंसिते तच्छ्रवणात् दर्पोत्सेके अन्यथा वक्तव्ये अन्यथोक्तमिति दर्शयन्नाह सहभृत्यगणमिति विभाषया सहशब्दस्य सादेशविधानादुभयथा प्रयुक्तम्। न चिरादल्पकालेन। अत्र पाण्डुसुतं सुयोधन इति वक्तव्ये पाण्डुसुतः सुयोधनमिति कर्मकर्त्तृव्यत्ययेन प्रयुक्तम्। अतएवात्र भ्रंशाख्यं नाटकाङ्गं यथोक्तं दर्पणे "दृप्तादीनां भवेद् भ्रंशो वाच्यादन्यपरं वचः" इति।

(४) राज्ञस्तात्पर्य्यविषयार्थानुगुणां विभक्तिं विपरिणमय्य तत्र श्लोके पाण्डुसुतं सुयोधन इत्येव पठित्वा एतद्विपरीतं द्वितीयान्तं पाण्डुसुतं प्रथमान्ततया, पदं प्रथमान्तं च सुयोधनपदं द्वितीयान्ततया, कर्मकर्त्तृत्ववैपरीत्येन पठितमित्यर्थः।

राजा। विनयन्धर! अद्य खलु भानुमती यथापूर्व्वं माममामन्त्र्य वासभवनात् प्रातरेव निष्क्रान्तेति आक्षिप्तमिव मे चेतस्तदादेशय तमुद्देशं यत्रस्था भानुमती।

कञ्चु। इत इत एतु देवः।

उभौ। परिक्रामतः।

कञ्चु। पुरोऽवलोक्य समन्ततो गन्धमाघ्राय। देव! पश्य पश्य एतत्तुहिन (१) कणशिशिरसमीरणोद्वेल्लितबन्धनच्युतशेफालिकाविरचितकुसुमप्रकरमीषदालोहितमुग्धबधूकपोलपाटललोध्रप्रसूनविजितश्यामलतासौभाग्य मुन्मीलितबहुलकुन्दकुसुमसुरभिशीतलं प्रभातकालरमणीयमग्रतस्ते बालोद्यानं तदवलोकयतु देवः। तथाहि,

(२) प्रालेयमिश्रमकरन्दकरालकोशैः<br>
पुष्पैः समं निपतिता रजनीप्रबुद्धैः।<br>
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध<br>
संसूचितानि कमलान्यलयः पतन्ति॥

---

(१) तुहिनकणैर्हिमलवैः शिशिरः शीतलः उद्वेल्लिता चालिता अत एव बन्धनच्युता वृन्तगलिता। कपोलमिव पाटलं श्वेत रक्तं यत् लोध्रप्रसूनं तन्नामकपुष्पं तेन विजितं सहयीकृतं श्यामलतायास्तन्नामकलतायाः सौभाग्यं सौन्दर्य्यं यत्र तस्मिन् सुभगः सुन्दरे प्रिये इति कोषः। भावे ष्यञि सुभगादित्वात् द्विपदवृद्धौ सौभाग्यम्।

(२) प्रालेयेण मिश्रो मिलितो यो मकरन्दः पुष्परसस्तेन करालः दन्तुरः नतोन्नतः कोशो मध्यं येषां तादृशैः, रात्रिविकसितैः कुसुमैः समं निपतिताः भूमौ पतिताः आश्रयपतने आश्रितपतनमुचितमेवेति भावः। अलयः विकाशोन्मुखानि कमलानि पतन्ति गच्छन्ति पतेर्गमनार्थ-

राजा। समन्तादवलोक्य विनयन्धर! इदमपरममुष्मिन् पक्षि रमणीयतरम्। पश्य

(१) जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-
र्हस्तैर्भानोर्नृपतयइव स्पृश्यमाना विबुद्धाः।
स्त्रीभिः सार्द्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः॥

कञ्चु। देव! नन्वेषा भानुमती सुवदनया तरलिकया च पर्य्युपास्यमाना तिष्ठति तदुपसर्पतु देवः।

राजा दृष्ट्वा। आर्य्य विनयन्धर! गच्छ त्वं सांग्रामिकं रथमुपकल्पयितुम् अहमपि देवीं दृष्ट्वानुपदमागत एव।

कञ्चु। एष कृतो देवादेशः। इति निष्क्रान्तः।

सखी। पिअसहि! अवि सुमरिदं तुए। (क)

---

त्वात् सकर्म्मत्वम् स्पन्दनमात्रे एवाकर्मकत्वम्। सर्व्वो हि जनोऽपभृत्युं हित्वा समुदयोन्मुखमाश्रयतीति लोकप्रसिद्धमिदमिति भावः।

(१) जृम्भारम्भो विकाशोपक्रमस्तेन विततानि विस्तारोन्मुखानि यानि दलानि पुष्पपत्राणि तेषामुपान्तः समीपं जालं गवाक्षस्य छिद्र-मिव तेन प्रविष्टैः भानोः सूर्य्यस्य हस्तैः करैरिव किरणैः स्पृश्यमाना अतएवान्यकरस्पर्शेन विबुद्धाः निद्रान्तं गता नृपतय इव द्विरेफाः भ्र-मराः घनपरिमलस्पन्दनगन्धः सान्द्रसौरभञ्च तस्य स्तोकेन लेशेन लक्ष्यो-ऽनुमेयोऽङ्गरागो येषां तादृशाः सन्तः विकचाया विकसिताया नलिन्या-गर्भं शय्येव तां स्त्रीभिः स्वनायिकाभिः सह मुञ्चन्ति। स्तोकशब्दस्य "करणे च स्तोकाल्पेत्यादि (२, ३, ३०, पा०सू०) सत्त्ववचनस्येति निर्द्देशात् क्वचिद्गुण परत्वमपि सूचितम् तेनात्राल्पतापरत्वेन षष्ठीसमासः सूपपादः।

---

(क) प्रियसखि! अपि स्मृतं त्वया।

भानु । सहि ! सुमरिदं अज्ज किल प्पमदवणे आसीणाए मम अग्गदो केणावि अदिस इददिव्वरूवेण णउलेण अहिसदं बाबादिदं । (क)

उभे । अपवार्य्य(१)आत्मगतम् । सान्तं पावं ! सान्तं पावं ! । प्रकाशम् । (२) तदो तदो । (ख)

भानु । सन्दावावगहीदहिअआए पुणो वि मए विसुमरिदं । (ग)

राजा । अवलोक्य । अहो ! देवी भानुमती सुवदनातरलिकाभ्यां सह किमपि मन्त्रयमाणा तिष्ठति भवतु अनेन लताजालेनान्तरितः शृणोमि तावदासां विस्रम्भालापम् । इति तथा कृत्वा स्थितः ।

सखी । अइ अलं संदाबेण कहेद पिअसही । (घ)

राजा । किं नु खल्वस्याः सन्तापकारणम् अथवाऽनामन्त्र मामियमद्य वासभवनान्निष्क्रान्तेति समर्थितः

---

(१) अपवार्य्य अन्यस्य रहस्यमप्रकाश्य "तद्भवेदपवारितं रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते इति लक्षयित्वा दर्पणकृता परावृत्यान्यस्य रहस्यकथनमपवारितमिति व्याख्यातम् ।

(२) "सर्वश्राव्यं प्रकाशं स्यादिति" दर्पणोक्तेः सर्व्वान् श्रावयित्वेत्यर्थः ।

---

(क) सखि ! स्मृतम्, अद्य किल प्रमदवने आसीनाया मम अग्रतः केनाप्यतिशयितदिव्यरूपेण नकुलेन अहिशतं व्यापादितम् ।

(ख) शान्तं पापम् ! शान्तं पापम् ! । ततस्ततः ।

(ग) सन्तापावगृहीतहृदयया पुनरपि मया विस्मृतम् ।

(घ) सखि ! अलं सन्तापेन कथयतु प्रियसखी ।

एवास्या मयि कोपः। अयि भानुमति! अविषयः खलु दुर्य्योधनो भवत्याः कोपस्य।

(१) किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया?
निद्राच्छेदविवर्त्तनेष्वभिमुखी नाद्यासि सम्भाविता?
अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो?
दोषं पश्यसि किं प्रिये! परिजनोपालम्भयोग्ये मयि॥

विचिन्त्य। अथवा

(२)इयमस्मदुपाश्रयैकचित्ता मनसा प्रेमनिबद्धमत्सरेण।
नियतं कुपितातिवल्लभत्वात् स्वयमुत्प्रेक्ष्य ममापराधलेशम्।

---

(१) कण्ठे मम कण्ठे भुजलतापाशस्त्वदीय भुजबन्धनं निद्राया आच्छेद ईषद्भङ्गस्तेन यत् विवर्त्तनं पार्श्वपरिवर्त्तनम् (एकपार्श्वेन सुप्तस्यान्यपार्श्वे स्वापार्थं यत्नभेदः) तेनाभिमुखी आभिमुख्यं गताऽपि पूर्व्वदिवसीयार्द्धरात्राद्वर्त्तमानदिवसीयार्द्धदिवसोऽद्यतनशब्दार्थस्तेन पूर्व-दिवसीयशेषरात्रेरपि अद्यतनत्वात् अद्येत्युक्तिः। न संभाविता आलि-ङ्गनसंभाषणादिना न संमानिता। लघुः क्षुद्रहृत्तिः। स्वप्ने इत्यनेन जागरणे तथादर्शनं कदापि न संभवत्यनेन दाक्षिण्यमात्मनः सूचितम्। परिजन इव परिवारक इव उपालम्भयोग्ये निन्दासहितभर्त्सनार्हे कं दोषं पश्यसि न कमपीत्यर्थः नितान्तानुकूलतया दोषस्पर्शित्वमसम्भावितं काकर्थनजा व्युदस्यते। अत्र दोषराहित्यद्योतनाय दोषलेशमिति वक्तव्यम्।

(२) अहमाश्रयः समवलम्बनं यस्य तादृशमेव चित्तं यस्याः सा इत्यावेवशब्दस्य एवार्थपरतायाः प्रसिद्धेः मदाश्रयमात्रचित्तेत्यर्थः अस्मदित्यत्र युष्मदस्मदोरेकत्वे विभाषया बहुत्वानुशासनात् बहुत्वपर-तया न मदादेशः। प्रेम्णैव कारणाभावेऽपि निबद्धः जातितो मत्सरो

तथापि किं वच्यतीति शृणुमस्तावत्।

भानु। अहं तदो तस्स अदिसइददिब्वरूबिणो णउ-लस्स दंसणेण उस्सुआ जादा। (क)

राजा। किं नाम अतिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता तत्किमनया माद्रीसुतेऽनुरक्तया वय-वयमेवं विप्रलब्धाः। (१) सोत्प्रेक्षम्। इयम (२) स्मरितादि पठित्वा। मूढ़ दुर्य्योधन, कुलटाविप्रलभ्यमानमात्मानं बहु-मन्यमानोऽधुना किं किं न वक्ष्यसि [ ] अहो एतदर्थ(३) मेवास्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनकथासु च

अत्र तादृशेन प्रेमृणश्चैष स्वभावः यदकारणेऽपि मात्सर्य्यमुत्पाद्यते इति। एवं विधेन हृदा उत्प्रेक्ष्य कल्पनामात्रेणोद्भाव्य अतिवल्लभत्वात् अति-प्रियत्वात् अपराधलेशोऽपि दुःसहः किं पुनर्बहुलापराध इति स्वच-यनु लेशमित्याह। नियतमित्युत्प्रेक्षायाम् इयम् उक्तेन हेतुना प्रणय-कुपितेत्युत्प्रेक्षे इत्यर्थः।

(१) विप्रलब्धाः प्रतारिता भ्रान्ता इति वा अस्मिन् पक्षे अमयेति हेतौ तृतीया। अन्यथास्वभावाया अन्यथाज्ञानमिह विप्रलम्भः।

(२) सोत्प्रेक्षं सस्मरणम् पूर्वोत्प्रेक्षितविषयस्मरणपूर्वकमिति। यावत् तथा च स्मरसि किं किं न वक्ष्यसीति नोक्तवानसीत्यर्थः स्मरणार्थयोगे अतीतकाले लृट्।

(३) शङ्कितकुलटाभावानुगुणमस्याश्चेष्टादिकमुत्प्रेक्ष्य अभिचार-परत्वमुपन्यस्यति एतदर्थमेवेति।

(क) अहं ततस्तस्य अतिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता।

[किं कण्ठे इत्यादि पठित्वा दिशोऽवलोक्य] क्वचिदधिकः पाठः।

पक्षपातः । दुर्य्योधनस्तु मोहाद विज्ञात (१) बन्धकी-हृदयसारः क्वापि परिभ्रान्तः । आः पापे ! अस्मत्परिग्रहपांसुले ! (२)

(३) तद्भीरुत्वं तव मम पुरः साहसानीदृशानि
श्लाघा साऽस्मद्वपुषि विनयव्युत्क्रमेऽप्येष रागः ।
तच्चौदार्य्यं मयि जड़मतौ चापले कोऽपि पन्थाः
ख्याते तस्मिन् वितमसि कुले जन्म कौलीनमेतत् ॥

---

(१) अज्ञातः अनिश्चितः बन्धकीहृदयस्य कुलटाचित्तस्य सारः स्थैर्य्यं येन । अन्यथास्थिरीकृतचित्ताया अन्यथोत्प्रेक्षणमिह परिभ्रमः ।

(२) मत्परिग्रहः (मत्कलत्रम्) भूत्वा पांसुला दुश्चरितासीत्वतीवानुचितमिति संबोधनेन द्योतयन्नाह मत्परिग्रहेति ।

(३) तत् अनुभूतं मत्समीपे भीरुत्वं तत्सूचकचेष्टादिकं प्रकाशितं तेन च तस्या भीरुत्वमनुमित्यानुभूतमित्यर्थः । ईदृशानि परपुरुषसङ्गमरूपाणि साहसानि सहसा बलेन कृतानि तेनाभीरुत्वं प्रकाशितम् एवं च भीरुत्वाभीरुत्वयोः समावेशदर्शनादाश्चर्य्यान्वितोऽहमिति भावः । एवमुत्तरत्र विरुद्धधर्म्मसमावेशोऽप्यूह्यः । अस्मद्वपुषि मद्देहे एव सौन्दर्य्यगुणकीर्त्तनरूपा सा श्लाघा, एष च सखीसमक्षं प्रकाश्यमानः । विनयव्युत्क्रमे विनयस्य सुचरितस्य पातिव्रत्यस्य व्युत्क्रमे अतिक्रमणे रागः अनुरागः, रागो हि गुणमूलकएव तथाच गुणाधिक्यदर्शनात् परपुरुषे रागइति मम गुणश्लाघाविरुद्धमिति भावः । जड़मतौ यथार्थभावबोधाक्षमे मयि विषये समीपे वा तत् औदार्य्यं सरलस्वभावः कापट्यरहितचेष्टितमिति यावत् प्रकाशितमित्यर्थः । चापले कापट्ये मां वञ्चयित्वा परपुरुषानुसरणे, कोऽपि पन्थाः उपायः, तथा च कापट्याकापट्ययोर्विरुद्धता । वितमसि दोषरहिते तथात्वेन ख्याते कुले वंशे जन्म एतदेतादृशं कौलीनमपवादस्तद्धेतुभूतासच्चेष्टादिकमुपचारात् । तथा च गुण-

सखी । तदो तदो । (क)

भाउ । तदो अहं तुरिदं आसणट्ठाणं एदं लदा-मण्डवं पविट्ठो सो वि मं अणुसरन्तो एव्व लदा मण्डवं पविट्ठो । (ख)

राजा । अहो ! कुलटोचितमस्याः पापायाः अशा लीनत्वम् । (१)

(२) यस्मिंश्चिरप्रणयनिर्भरबद्धभाव

मावेदितो रहसि मत्सुरतोपभोगः ।

तत्रैव दुश्चरितमद्य निवेदयन्ती

ह्रीणासि पापहृदये ! न सखीजनेऽस्मिन् ॥

---

वंशजन्मनोविसदृशमेतदिति भावः । कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोरिति कोषः ।

(१) शालामर्हतीति शालीना लज्जावती अशालीनत्वं निर्लज्जता दुःशीलत्वमिति पाठे दुश्चरितमित्यर्थः ।

(२) यस्मिन् सखीजने चिरं प्रणयेन स्नेहेन निर्भरं सातिशयं यथा तथा बद्धः विश्लेषराहित्यार्थं कृतबन्धनोभावोऽनुरागो यस्मिन् तद्यथा तथा आवेदितः कथितः । तत्रैव सखीजने दुश्चरितं पापाचरणं व्यभिचाररूपं कथयितुं न ह्रीणासीत्यन्वयः पापं पापान्वितं हृदयं यस्याः तत् संबुद्धौ ।

---

(क) ततस्ततः ।

(ख) ततोऽहं त्वरितमासनस्थानमेतत्लतामण्डपं प्रविष्टा, ततः सोऽपि मामनुसरन्नेव लतामण्डपं प्रविष्टः । आसनस्थानं वासस्थानम् ।

उभे । तदो तदो । (क)

भानु । तदो तेण सप्पगब्भं [ ] पसारिअकरेण अप हरिअं मे त्थणं सुअम् । (ख)

राजा । सक्षोभम् । अलमिदानीमतः परमाकर्णनेन भवतु तावत्तस्य परवनितास्कन्दनप्रगल्भस्य (१) माद्री सुत-हतकस्य जीवितमपहरामि । किञ्चिद्गत्वा विचिन्त्य । अथवा इय-मेव तावत्पापशीला प्रथममनुशासनीया इति निवर्त्तते ।

उभे । तदो तदो ।

भानु । तदो अहं अज्जउत्तस्स पभादमङ्गलतूररबमि-स्सेण बारबिलासिणीसंगीदसद्देण पड़िबोधिदह्मि । (ग)

राजा । सवितर्कम् । किं नाम खलु प्रतिबोधितास्मीति किन्नु खलु स्वप्नदर्शनमनया वर्णितम् । विचिन्त्य । भवतु सखीवचनाद्व्यक्तिर्भविष्यति ।

उभे । सविषादमन्योन्यं पश्यतः ।

सुवदना । जं किं बि अचाहिदं तं भाइरहीप्पमु

---

(१) परवनितायाः परस्त्रियाः अवस्कन्दनेन अपहरणेन प्रगल्भस्य धृष्टस्य ।

---

(क) ततस्ततः ।

(ख) ततस्तेन सप्रगल्भं प्रसारितकरेण अपहृतं मे स्तनांशुकम् । सप्पगब्भं इत्यत्र सगव्वं इति पाठे सगर्वम् ।

(ग) हला ततोऽहमार्य्यपुत्रस्य प्रभातमङ्गलतूर्य्यरवमिश्रेण वार विलासिनीसंगीतशब्देन प्रतिबोधितास्मि । "आर्य्यपुत्रेति वक्तव्यः पतिः पत्नीजनेन"त्विति भरतोक्तेः आर्य्यपुत्रस्य स्वामिन इत्यर्थः ।

ह्याणं णइ्ण सलिलेण अवहारीअदु भअवदाणं बह्मणाणं वि आसीसाए आहुदिहुदेण पज्जलि देण भअवदा हुदासणेण अन्तरीअदु । (क)

राजा । अलं विकल्पेन स्वप्नदर्शनमेवैतदनया वर्णितम् मया पुनर्मन्दधियाऽन्यथैव सम्भावितम् ।

(१) दिष्ट्याऽर्द्धश्रुतविप्रलम्भजनितक्रोधादहं नो गतो
दिष्ट्या नो परुषं रुषार्द्धकथने किञ्चिन्मया व्याहृतम् ।
मां प्रत्याययितुं विमूढहृदयं दिष्ट्या कथान्तं गता
मिथ्यादूषितयाऽनया विरहितं दिष्ट्या न जातं जगत् ॥

भानु । हला ! कहेहि किं एत्थ सुहसूअअम् । ( ख )

उभे । अन्योन्यमवलोक्य अपवार्य ।(ग)एत्थ णत्थि त्थोअं वि सुहसूअअं जइ एत्थ अलीअं कहइस्सं ता अवराहिणी

---

(२५) अर्द्धं यथा तथा श्रुतः विप्रलम्भः विसंवादस्तत्स्चकवाक्यमित्यर्थः तज्जनितक्रोधात्, तज्जन्यकोपात्, प्रत्याययितुं विश्वस्तं कर्त्तुम् कथायाः अभीष्टार्थकवाक्यस्य अन्तं समाप्तिं गता वाक्यं समापयामासेत्यर्थः । मिथ्यादूषितया व्यभिचारित्व भ्रमेण सम्भावितदूषणया । विरहितमित्यनेन मया व्यापादितये त्यर्थात् गम्यते । दिष्ट्येति हर्षसूचनार्थं भाग्यहेतुकत्वोत्कीर्त्तनम् ।

---

(क) यत्किमप्यत्याहितं तद्भागीरथीप्रमुखाणां नदीनां सलिलेनापह्रियतां भगवतां ब्राह्मणानामपि आशिषा आहुतिहुतेन प्रज्वलितेन भगवता हुतवहेन च अन्तर्य्यताम् । अत्याहितमशुभम् ।

(ख) हला ! कथय किमत्र शुभसूचकम् ।

(ग) अत्र नास्ति स्तोकमपि शुभसूचकम् । यद्यलीकं कथयिष्यामि तदापराधिनी भविष्यामि सएव स्निग्धो जनः यः पृष्टः परुषमपि हितं

(१) भविस्सम्। सो एव्व सिणिद्धो जणो जो पुच्छिदो परुसं वि हिदं भणादि। प्रकाशम्। सहि! सव्वं एव्व एत्थ असुहणिवेदअं ता देवदाणं पणामेण दुव्वादिपडिग्गहेण अ अन्तरीअदु णहु दंट्टिणो णउलस्स अण्णस्स वा दंसणं अहिसदवहं वि सिविणए पसंसन्ति विअक्खणा।

राजा। अवितथमाह सवदना नकुलेन पन्नगशतबधः स्तनांशुकाहरणञ्च नियतमरिष्टोदर्क(२)मस्माकं तर्कयामि।

(३) पर्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम्।

---

(१) "अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभ" इत्युक्तेः सुहृदा हितं परुषमपि वाच्यमिति नियमे स्थिते नियमाति क्रमरूपदोषरूपापराधवती स्यामिति तात्पर्य्यार्थः।

(२) अरिष्ट सुदर्के उत्तरकाले यस्य तत् अरिष्टफलकमित्यर्थः।

(३) "अकामानुमतौ काम"मिति कोषात् शुभा वा अशुभा वा स्वप्नाः दृश्यन्ते इत्यकामेनाप्यनुमन्तव्यमित्यर्थः। अथ वा कामं यथेष्टमित्यर्थः। पर्य्यायेण क्रमेण कदाचित् शुभाः कदाचिच्च अशुभा इत्यनेन क्रमेणेत्यर्थः। प्रायेणैवेति पाठः दर्पणधृतः। इयं हन्यमानाहीनां शतसंख्या तत्सदृशसंख्या अहीनामिव अस्माकमपि शतसंख्यावत्त्वादि-

---

भणति। सखि! सर्व्वमेवाशुभनिवेदकं तद्देवतानां प्रणामेन दूर्व्वादिपरिग्रहेण चान्तर्य्यताम् न तु दंष्ट्रिणो नकुलस्यान्यस्य वा दर्शनमहिशतबधमपि स्वप्ने प्रशंसन्ति विचक्षणाः। अन्तरशब्दात् णिचि कर्म्मणि रूपम् अन्तरं व्यवहितं क्रियताम् अन्तर्य्यताम् अन्तरितं क्रियतामित्यर्थः। दूर्व्वाद्यौषधिपरिग्रहस्याप्यमङ्गलनाशकत्वं स्वत्न्तं बोध्यम् दुजादिपडिग्गहेणेति पाठे द्विजातिसम्प्रदानकप्रतिग्रहेणेत्यर्थः इह चाशीरलङ्कारः "आशीरिष्टार्थशंसन"मिति भरतवाक्यात्।

वामाक्षिस्पन्दनं(१)सूचयित्वा । आः ! कथं ममापि नाम दुर्य्योधनस्यानिमित्तानि(२)हृदयक्षोभमावेदयन्ति । सावष्टम्भम् । अथवा भीरुजनहृदयकम्पनेषु का गणना दुर्य्योधनस्यैवंविधेषु [ ]। गीतञ्चायमर्थोऽङ्गिरसा ।

(३)ग्रहाणां चरितं स्वप्नोऽनिमित्तोत्पादकं तथा ।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥

तद्भानुमत्याः स्त्रीस्वभावसुलभामलीकाशङ्कामपनयामि ।

भानु । हला सुवअणे ! पेक्ख उदअगिरिसिहरन्तरविमुक्करहवरविअलिअसंझारा अप्पसण्णदरालो अमण्डलो जादो भअवं दिवहणाहो ।(क)

---

त्यर्थः। स्पृशति विषयीकरोति। अत्र तर्काख्यं नाटकाङ्गम् यथोक्तं दर्पणे''तुल्यतर्को यदर्थेन तर्कःप्रकृतगामिने'ति ।

(२९)वामाक्षिस्पन्दनं हि पुंसां क्षतिकरं निमित्तं प्रसिद्धम् ।

(२) अनिमित्तानि उत्पातादिरिष्टसूचकनिमित्तानि ।

(३) ग्रहाणां रव्यादिनां चरितं गतिभेदः राश्यन्तरसञ्चारादिः रिष्टसूचकदशापाकादिकालसूचकगतिभेदश्च स्वप्नो दुर्निमित्त दर्शनेनाशुभसूचकः अनिमित्तस्य दुष्टनिमित्तस्य उत्पादकं सूचकं भूमिकम्पोल्कापातादि एतानि काकतालीयं काकगमनकालिक तालपतनमिव अतर्कितोपनतमित्यर्थः । फलन्ति फलसाधनाय कल्पन्ते तेभ्यः प्राज्ञाः कृतधियो न विभ्यतीत्यन्वयः ।

---

(क) हला सुवदने ! उदयगिरिशिखरान्तरविमुक्तरथवरविदलितसन्ध्यारागप्रसन्नतरालोकमण्डलो जातो भगवान् दिवसनाथः ।

---

[ कम्पनेषु इत्यधिक पाठः । ]

सखी। भट्टिणि! रोसाणिअकसकन्ति [सस्सिरीएण] लदाजालन्तरोवहिदकिरणजालेण [पिसङ्गीकिदो] ज्जाणभूमिभाओ [ ] दुप्पेक्खणिज्जो भअवं सहस्सरस्सि संवुत्तो ता समओ दे लोहिदचन्दणकुसुमगब्भेण अग्घेण पज्जुवट्ठादुम्। (क)

भानु। हञ्जे तरलिए! उवणेहि मे अग्घभाअणं जाव भअवदो सहस्सकिरणस्स सवरिअं णिव्वट्टेमि। (ख)

चेटी। जं देवी आणवेदि इति निष्क्रम्य पुनः प्रविश्य। भट्टिणि! एदं अग्घभाअणं णिव्वट्टेदु भअवदो सहस्सरस्सिणो सवरिअम्। (ग)

---

(क) भट्टिनि! रोषान्वितकर्णकान्तिसश्रीकेण लताजालान्तरोपहितकिरणजालेन पिशङ्गीकृतोद्यानभूमिभागो दुष्प्रेक्षणीयो भगवान् सहस्ररश्मिः संवृत्तः, तत् समयस्ते लोहितचन्दनकुसुमगर्भेणार्घेण पर्युपस्थातुम्।

(ख) हञ्जे तरलिके! उपनय मे अर्घभाजनं, यावद्भगवतः सहस्रकिरणस्य सपर्य्यां निर्वर्त्तयामि।

(ग) यद्देवी आज्ञापयति। भट्टिनि! इदमर्घभाजनं, निर्वर्त्तय भगवतः सहस्ररश्मेः सपर्य्याम्।

---

[ सरिसेण ] सदृशेन। इत्यर्थः

[ पिञ्जरिदो इति क्वचित् पाठः। ] पिञ्जरितो।

[ पूरिदपदिण्णो रिउविअ इत्यधिकः क्वचित् पाठः। ]

पूरितप्रतिज्ञो रिपुरिव

राजा । अयमेव साधुतरोऽवसरः प्रियासमीपमुपगन्तुम् । इत्युपसर्पति ।

सखी । विलोक्यात्मगतम् । कहं महाराओ आअदो हन्त ! जादो से णिअमभङ्गो । (क)

भानु । दिनकराभिमुखीभूय ।(१)भअवं अम्बरमहासरेक्कसहस्सपत्त पुव्वदिसाबहुमुहमण्डणकुङ्कुमविसेसअ, सअलभुवणेक्कणअप्पदीव जं एत्थ सिविणअदंसणे किं वि अच्चाहिदं तं भअवदो पणामेण सभादुअस्स अज्जउत्तस्स कुसलपरिणामी होदु (ख) अर्घं दत्त्वा । हञ्जे तरलिए ! उवणेहि मे कुसुमाइं अवराणं वि देवदाणं सवरिअं णिव्वट्टइदुम् (ग)

इति हस्तौ प्रसारयति ।

राजा संज्ञया परिजनमुत्सार्य्य पुष्पाणि स्वयमुपनयति, स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति च ।

---

(१) अधीरेण राज्ञा नियमस्यापि संगमादिना दूषयिष्यत इति भावः ।

---

(क) कथं महाराज आगतः हन्त जातोऽस्या नियमभङ्गः ।

(ख) भगवन् ! अम्बरमहासरएकसहस्रपत्र ! पूर्वदिशावधूमुखमण्डनकुङ्कुमविशेषक ! सकलभुवनैकरत्नप्रदीप ! यदत्र स्वप्नदर्शने किमप्यत्याहितं, तद्भगवतः प्रणामेन सभ्रातृकस्यार्य्यपुत्रस्य कुशलपरिणामि भवतु । विशेषकस्तिलकम् अत्याहितमरिष्टम् ।

(ग) हञ्जे तरलिके ! उपनय मे कुसुमानि अपरासामपि देवतानां सपर्य्यां निर्वर्त्तयितुम् ।

भानु। सरोषम्। अहो! पमादो परि अणस्स। (क) परिहृत्य, राजानमवलोक्य, ससाध्वसं लज्जां नाटयति।

राजा। देवि! अनिपुणः परिजनोऽयमेवंविधसेवाऽवकाशे तत्प्रभवत्यनुशासने देवी। अयि प्रिये!

(१) विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः
परिजनपथवर्त्तिन्यत्र किं संभ्रमेण।
स्मितमधुरमुदारं देवि! मामालपोच्चैः
प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम्॥

भानु। अब्भणु जाणादु मं महाराओ अत्थि मे कस्सिं वि णिअमे अहिलासो। (ख)

राजा। श्रुतविस्तारएवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति तदलं प्रकृतिसुकुमारमात्मानं खेदयितुम्।

भानु। अज्जउत्त! अदिमेत्तं मे सङ्का बाहेइ ता अणु मणदु मं अज्जउत्तो। (ग)

---

(१) नियमस्थतया कज्जलशून्यत्वेन धवलापाङ्गत्वं चक्षुषः। स्मितमधुरं यथा स्यात्तथा उदारं औदार्य्यान्वितं माम् आलप। अयं मम पाण्योरञ्जलिः अञ्जल्याकारौ पाणी त्वां सेवितुं प्रभवति अपराधिनोऽञ्जलिबन्धनमेवोचितमिति तथा करोमीतिभावः।

---

(क) अहो प्रमादः परिजनस्य।

(ख) अभ्यनुजानातु मां महाराजः, अस्ति मे कस्मिन्नपि नियमेऽभिलाषः।

(ग) आर्य्यपुत्र! अतिमात्रं मां शङ्का बाधते, तदनुमन्यतां माम् आर्य्यपुत्रः।

राजा। सगर्व्वम्। देवि! अलमनया शङ्कया। पश्य

(१) किन्नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि।
भीरु! भ्रातृशतस्य मे भुजवनच्छायासुखोपास्थिता
त्वं दुर्य्योधनकेशरीन्द्रगृहिणी शङ्कास्पदं किन्तव? ॥

भानु। अज्जउत्त! णहि किं वि मे सङ्काकालणं तुम्हेसु सणिहिदेसु किन्तु अज्जउत्तस्स एव्व मणोरहसम्पत्तिं अहिणन्दामि। (क)

राजा। अयि सुन्दरि! एतावन्तएव मनोरथाः यदहं वनितया सङ्गतः स्वेच्छया विहरामीति। पश्य

(२) प्रेमाबन्धस्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथां मन्दमन्दस्मितं वा।
वक्त्रेन्दुं ते नियममुषितालक्तकाङ्काधरं वा
पातुं वाञ्छा परमसुलभं किन्नु दुर्य्योधनस्य ॥

---

(१) भुजा एव वनं तस्य छायायां सुखेनोपास्थिता भुजानां वनत्वारोपेणास्त्रं विनापि तेषां शत्रुविजयादिना सौख्यकारित्वमिति सूचितम्।

(२) प्रेमाबन्धेन रत्यावेशेन स्तिमितम् ईषन्मीलितं यन्नयनं तेन आपीयमाना विजिता अब्जशोभा येन। नियमेन व्रतभेदेन मुषितः अपहृतः। अलक्तकाङ्कः यावकचिह्नं यस्य तादृशोऽधरो यस्य तथाविधं वक्त्रेन्दुं वक्त्रमिन्दुमिव मुखचन्द्रम् असुलभं अतस्तया दुष्प्रापं पातुं वाञ्छा तु भो किम्। अपरं तद्भिन्नं किमपि मम न वाञ्छनीयमित्यर्थः।

---

(क) आर्य्यपुत्र! न किमपि मे शङ्काकारणं युष्मासु सन्निहितेषु किन्तु आर्य्यपुत्रस्यैव मनोरथसम्पत्तिमभिनन्दामि।

नेपथ्ये। महान् कलकलः। सर्वे आकर्णयन्ति।

भानु। राजानं परिष्वज्य। परित्ताअदु परित्ताअदु अज्जउत्तो। (क)

राजा। समन्तादवलोक्य। प्रिये! अलं संभ्रमेण। पश्य

(१)दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांशुदण्डोऽन्तरीक्षे
झङ्कारी शर्करालः पथिषु विटपिनां स्कन्धकाषैः सधूमः।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु! किं संभ्रमेण॥

सखी। महाराओ पविसदु एदं दारुपव्वअपासादं उव्वेअकारी क्खु अअं उत्थिदो परुसरअकलुसीकिदणअणो बिदलिदतरुवरसद्दवित्तत्थमन्दुरापरिब्भट्टवल्लहतुलङ्गमो पज्जाउलीकिदजणपद्धदू भीसणो समीरणासारो।(ख)

---

(१) दिक्षु व्यूढानि विक्षिप्तानि अङ्घ्रिपानां वृक्षाणामङ्गानि शाखादीनि येन स अन्तरिक्षे तृणेन जटिलः जटाकारताप्राप्त्वेन व्याप्तः चलन् ऊर्द्ध्वं गच्छन् पांशुदण्डः पांशुर्दण्ड इव दण्डाकार पांशुसमूहो यस्मात्। तादृशः, शर्करालः शर्करा खापरेति प्रसिद्धा। तद्वान् विटपिनां स्कन्धकाषैः स्कन्धस्य घर्षणैस्तत्सम्पर्कात् सधूमः धूमसहित इव। अभिनवोजलदोमेघस्तस्य उद्गारो ध्वनिरिव गम्भीरो धीरश्च। चण्डः प्रचण्ड आरम्भो वेगो यस्य एतादृशो वायुः परिदिशं प्रतिदिशं वहतीति वातोत्पातस्य सार्व्वत्रिकत्वात् संभ्रमो न कर्त्तव्य इत्यर्थः।

---

(क) परित्रायतां परित्रायतामार्य्यपुत्रः।

(ख) महाराज! प्रविशत्विमं दारुपर्व्वतप्रासादम् उद्वेगकारी खल्वयं परुषरजःकलुषीकृतनयनो विदलिततरुवरशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमः पर्य्याकुलीकृतजनपद्धतिः भीषणः समीरणासारः। दारुपर्व्वत आक्रीड़पर्व्वतः समीरस्य आसारो वृष्टिवेग इव वातसमूह इत्यर्थः।

राजा । उपकारि खल्विदं वात्याचक्रं सुयोधनस्य, यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या सम्पादितोऽस्मन्मनोरथः । कथमिति

(१) न्यस्ता न भ्रुकुटिर्न वाष्पसलिलैराच्छादिते लोचने
नीतं नाननमन्यतः सशपथं नाहं स्पृशन् वारितः ।
तन्व्या लग्नपयोधरं भयवशादारब्धमालिङ्गितुं
भङ्क्ताऽस्या नियमस्य भीषणमरुन्नायं वयस्यो नु मे ॥

तत्सम्पूर्णमनोरथस्य मे कामचारः(२)सम्प्रति विहारेषु तदितो दारुपर्वतमेव गच्छामः ।

---

(१) अयं भीषणमरुन्न किन्तु मम वयस्य इति नु उत्प्रेक्षे वाय्वात्मन उपकारकरणात्तस्य वयस्यत्वमुत्प्रेक्षे इति भावः । तत्कृतमुपकारं दर्शयति न्यस्तेत्यादि । नियमकाले बलादालिङ्गने भ्रुकुटिनयनाश्रुपातादिकं क्रियते तच्च बाधाभयेन स्वयमेव कृतमित्याशयः । अक्षरार्थस्तु भ्रुकुटिः न न्यस्ता अनभिमत करणे भ्रुकौटिल्यं स्त्रीणां स्वभावसिद्धं तच्च कृतं नापि चक्षुषी अश्रुभिराच्छादिते इदमपि स्त्रीणां स्वाभाविकम् यदनभिमत करणे किञ्चिद्वक्तुमसामर्थ्ये अश्रुजलप्लावनेन लोचने आच्छाद्येते । नापि अन्यतः अन्यत्राननं नीतं परावृत्य स्थापितं नापि स्पृशन्नहं "त्वया नाहं स्पर्शनीयेति" शपथं दत्त्वा निवारितः इदमपि तासां स्वाभाविकमेव । स्वकृतालिङ्गनादौ प्रतिबन्धाभावमुक्त्वा तथैव तत् स्वयंकृतमित्याह भयवशात् लग्नपयोधरं सम्बद्धस्तनं यथा तथा आलिङ्गितुमारब्धम् । अनेन तदानीमलभ्यं तदालिङ्गनं संपादयतो वायोरुपकारितेति सूचितम् । अस्या भानुमत्या नियमस्य व्रतस्य भङ्क्ता नाशयिता ।

(२) स्वेच्छाचारः ।

सर्वे वात्याबाधां रूपयन्तो यत्नतः परिक्रामन्ति।

राजा। (१)कुरु घनोरु! पदानि शनैः शनै-
रयि! विमुञ्च गतिं परिवेपिनीं।
सुतनु! बाहुलतोपनिबन्धनं
मम निपीड़य गाढमुरः स्थलम्॥

प्रवेशं रूपयित्वा। प्रिये! अलब्धावकाशः समीरणः संवृतत्वाद् गर्भगृहस्य(२)विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम्।

भानु। सहर्षम्। दिट्ठिआ उप्पादसमीरणासारो ण बाधेइ। (क)

सखी। महाराअ! आरोहणसंभमणिस्सहं पिअसहीए उरुजुअलं ता कीस दाणीं महाराओ आसणवेदीं ण अनुभूसेदि। (ख)

राजा। देवीमवलोक्य। भवति! अनल्पमेवापकृतं वात्यासम्भ्रमेण। तथाहि।

---

(१) घनोरु हे निविड़ोरु! शनैःशनैः पदानि कुरु। बाहुर्लतेव तया उपनिबन्धनं बन्धनं यत्र तद्यथा तथा उरःस्थलं गाढ़ं निपीड़य आलिङ्गेत्यर्थः।

(२) गर्भगृहस्य मध्यगृहस्य संवृतत्वात् भित्त्यादिनावृतत्वात् समीरणः अलब्धावकाशः अप्राप्तप्रवेशः। उन्मृष्टः प्रोञ्छितो रेणुनिकरो धूलिसमूहो यस्मात्तादृशं चक्षुरुन्मीलय।

---

(क) दिष्ट्या उत्पातसमीरणासारो न बाधते।

(ख) महाराज! आरोहणसंभ्रमनिःसहं प्रियसख्या ऊरुयुगलं तत् कस्मादिदानीं महाराज आसनवेदीं नानुभूषयसि।

(१)रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वा-
दुत्कम्पोऽल्पोऽपि पीनस्तनभरितमुरः क्षिप्तहारं दुनोति।
ऊर्वोर्मन्देऽपि याते पृथुजघनभराद्वेपथुर्वर्द्धतेऽस्या
वात्या खेदं कृशाङ्ग्याः सुचिरमवयवैर्दत्तहस्ता करोति॥

सर्वे उपविशन्ति।

राजा। तत् किमित्यनास्तीर्णं कठिनशिलातलमध्यास्ते देवी यतः।

(२)लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य।
अध्यासितुं तव चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु! ममोरुयुग्मम्॥

प्रविश्य पटाक्षेपेण संभ्रान्तः कञ्चुकी। देव! भग्नं भग्नम्।

सर्वे सातङ्कं पश्यन्ति।

राजा। केन?।

---

(१) मन्दे स्वल्पेऽपि याते गमने सति बहुगमनाभावेऽपीत्यर्थः। दत्तहस्ता कृतालम्बना दत्तसाहाय्येति यावत् वात्या वातसमूहः खेदं सुचिरं बहुकालं करोति।

(२) हे करभोरु! ममोरुयुग्ममेव तवोरुयुगलस्य अध्यासितुं पर्याप्तं समर्थं तत् किमन्याध्यासनेनेति भावः। इह छलनामा सन्धिः यथोक्तं भरतेन "इष्टार्थयुक्तं यद्वाक्यं भाष्यतेऽन्यमनीषया। वाक्यान्तरेण संयोगात् छलनामाभिधीयते" इति इह राजोरुयुग्मं भानुमत्या ऊरुयुगाध्यासनपर्याप्ततया प्रक्रान्तं तस्य भग्नं भग्न मित्यनेन सम्बन्धस्तेन भावितकृत्य-सूचनार्थत्वेन शङ्कितमित्यन्यपरतयास्य छलत्वम्।

कञ्चु। देव! भीमेन। [ ]

राजा। आः! किं प्रलपसि,

भानु। अज्ज! किं अणत्थं मन्तेसि (क)

कञ्चु। सभयम्। देव! कथयामि सर्वम्।

(१) भग्नं भीमेन भवतो मरुता रथकेतनम्।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ॥

राजा। यदि बलवत्समीरणवेगात् कम्पिते भुवने भग्नः स्यन्दनकेतुः तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति।

कञ्चु। देव! न किञ्चित् किन्तु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति।

भानु। अज्जउत्त! पड़िहरीअदु एदं अणिमित्तं प्पसन्नवह्मणवेआणुघोसेण होमेण अ। (ख)

राजा। सावज्ञम्। ननु गच्छ पुरोहितसुमित्राय निवेदय।

---

(१) भीमेन भीषणेन। किङ्किणीक्वाणेन क्षुद्रघण्टिकाशब्देन आबद्धः कृतः आक्रन्दः क्रन्दनं येन तथाभूतमिव भूमौ पतितम्।

---

(क) आर्य्य! किमनर्थं मन्त्रयसि।

(ख) आर्य्यपुत्र! परिह्रार्य्यतामेतदनिमित्तं प्रसन्नब्राह्मणवेदानुघोषेण होमेन च।

---

[राजा। कस्य।]

कञ्चु। भवतः।] इत्यधिक पाठः दर्पणे दृष्टः।

कञ्चु । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

प्रविश्य प्रतीहारी सोद्वेगमुपसृत्य । जअदु जअदु महाराओ । महाराअ ! एसा क्खु जामादुणो सिन्धुराअस्स मादा दुस्सला अ पड़िहारभूमीए चिट्ठदि (क)

राजा । स्वगतम् । किं जयद्रथमाता दुःशला चेति क्वचिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न कश्चिदत्याहितमाचेष्टितं भवेत् । प्रकाशम् । गच्छ प्रवेशय शीघ्रम् ।

प्रती । जं महाराओ आणवेदि (ख) इति निष्क्रान्ता ।

ततः प्रविशति संभ्रान्ता जयद्रथमाता दुःशला च ।

उभे । सास्रम् दुर्योधनस्य पादयोः पततः ।

माता पडित्ताअदु पडित्ताअदु कुलणाहो (ग)

दुःशला । रोदिति ।

राजा । ससंभ्रममुत्थाप्य । अम्ब ! समाश्वसिहि समाश्वसिहि किमत्याहितम् अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ?

माता । जाद ! कुदो कुसलम् ? । (घ)

---

(क) जयतु जयतु महाराजः । महाराज ! एषा खलु जामातुः सिन्धुराजस्य (जयद्रथस्य) माता दुःशला च प्रतीहारभूमौ (द्वारे) तिष्ठतः । दुःशला दुर्योधनस्य स्वसा ।

(ख) यत् महाराज आज्ञापयति ।

(ग) परित्रायतां परित्रायतां कुरुनाथः ।

(घ) जात ! कुतः कुशलम् । पुत्रस्थानीयानां जात इति संबोधनम्

राजा। कथमिव।

माता। साशङ्कम्। अज्ज! क्खु पुत्तवहामरिसुद्दीविदेण गण्डीविणा अणत्थमिदे दिवहसाहे तस्स वहो पड़िसादो। (क)

राजा। सस्मितम्। इदं तदस्रकारणमस्वाया दुःशलायाश्च। पुत्रशोकादुत्तप्तस्य किरीटिनः प्रलपितैरेवमवस्था, अहो मुग्धत्वमबलानाम्। कृतं विषादेनवत्से! दुःशले! अलमश्रुपातेन। कुतश्चायमस्य धनञ्जयस्य प्रभावो दुर्य्योधनबाहुपरिघ (१) रक्षितस्य महारथ (२) जयद्रथस्य विपत्तिमुत्पादयितुम्।

माता। जाद! जजोअ बन्धुबहामरिसुद्दीविदकोवणा अणपेक्खिदसरीरा बीरा पलिक्कमन्ति। (ख)

राजा। सोपहासम्। एवमेतत् सर्व्वजनप्रसिद्धमेवामर्षित्वं पाण्डवानाम् पश्य।

---

(१) बाहुःपरिघ इव परिघोऽस्त्रभेदः सर्वार्थसाधनत्वाद्बाहोः परिघत्वम्।

(२) "एको दश सहस्राणि यो योधयति धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथ"इत्याद्यलक्षणस्तेन स्वत एव न तस्य विपत्तिः किमुत मद्रक्षितस्येति भावः।

---

(क) अद्य खलु पुत्रबधामर्षोद्दीपितेन गाण्डीविना अनस्तमिते दिवसनाथे तस्य बधः प्रतिज्ञातः। अस्तमिति मान्तमव्ययम्।

(ख) जात! यतश्च बन्धुबधामर्षोद्दीपितकोपानला अनपेक्षित शरीरा वीराः परिक्रामन्ति।

(१) हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रसमितौ गौर्गौरिति व्याहृता ।
तस्मिन्नेव स किन्नु गाण्डिवधरो नासीत् पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ।

माता । असमत्तपड़िसाभरेण आप्पवहो तेण पड़िसादो । (क)

राजा । यद्येवमलमानन्दस्थानेऽपि ते विषादेन, ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति । मातः ! का शक्तिरस्ति धनञ्जयस्य अन्यस्य वा कुरुशतपरिवारवर्द्धितमहिम्नः

---

(१) ममाज्ञया दुःशासनेन कर्त्रा हस्तेनाकृष्टं विलोलं केशो वसनं च यस्यास्तथाभूता पाञ्चाली सर्वराजसभायामेव न त्वेकान्ते, गौर्गौरिति अवध्यत्वात् अहं गोसदृशीत्येवं द्विरुक्तिः संभ्रमातिशयद्योतनार्था व्याहृता व्याहारिता अन्तर्भूतणिजर्थः । राजवधूनां गौर्गौरित्यभिधानमतीवापमानसूचकमिति समाचारः। तस्मिन्नेव समये विषये वा एषः स्वचक्षुषैव तद्द्रष्टा पृथानन्दनोऽर्जुनः किं नु किमिति गाण्डिवधरो नासीत् न जातः अपमानकरं तदेतत् तस्य किं कोपस्थानं न व्यक्तिमात्रस्य तस्य क्रोधस्थानत्वम् विशेषतो यूनस्तरुणस्य तदवस्थायां क्रोधस्य स्वाभाविकत्वात् तत्रापि क्षत्रियवंशजस्यातिशयेन स्वाभाविकक्रोधवत्त्वं तत्रापि च कृतिनः कृतकार्य्यस्य क्रोधातिशयवत्त्वं भवत्येव तत्र यद्यस्यामर्षित्वं न तदा कदास्यामर्षित्वमित्यमर्षित्वाभावः प्रसिद्धतया यदाक्षिप्तः तत्समर्थितमिति भावः ।

---

(क) असमाप्तप्रतिज्ञाभरेणात्मवधस्तेन प्रतिज्ञातः ।

कृपकर्णद्रोणाश्वत्थामादिमहारथद्विगुणीकृतनिरावरण(१)विक्रमस्य नामापि ग्रहीतुं ते तनयस्य, अयि सुतपराक्रमानभिज्ञे !

(२) धर्म्मात्मजं प्रति यमौ च कथैव नास्ति
मध्ये वृकोदरकिरीटभृतोर्बलेन ।
एकोऽपि विस्फुरितमण्डलचापचक्रं
कः सिन्धुराजमभिषेणयितुं समर्थः ॥

भानु । अज्जउत्त ! जइवि एव्वं तहवि गुरुकिदपडिस्साभरो धनञ्जओ त्ति ट्ठाणं क्खु सङ्काए । (क)

माता । जादे ! साहु कालो इदं तुए मन्तिदम् । (ख)

राजा । आः ! ममापि नाम दुर्य्योधनस्य शङ्कास्थानं पाण्डवाः ? पश्य,

---

(१) निरावरणः प्रसरणप्रतीघातरहितः स्वभावतस्तस्य निरावरणत्वं पुनर्द्रोणादिभिर्द्विगुणीकृतत्वाच्च धनञ्जयस्य तदभिभवने शक्तिरिति भावः ।

(२) युधिष्ठिरं यमौ च प्रति कथा जयद्रथेन सह युद्धस्य प्रसक्तिर्नास्ति भीमार्ज्जुनयोर्मध्ये कः एकः बलेन विस्फारितं मण्डलाकारं धनुश्चक्रं येन तादृशं सिन्धुराजमभिषेणयितुम् आभिमुख्येन योद्धुं समर्थः न कोऽपीत्यर्थः ।

---

(क) आर्य्यपुत्र ! यद्यपि एवं तथापि गुरुकृतप्रतिज्ञाभरो धनञ्जय इति स्थानं खलु शङ्कायाः ।

(ख) जाते ! साधु, कालोचितं त्वया मन्त्रितम् ।

(१)कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः ।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां चमूना
माक्रान्ता भ्रातृभिर्मे दिशिदिशि समरे कोटयः सम्पतन्ति ॥

अयि भानुमति ! ( २ ) विज्ञातपाण्डवप्रभावे ! किं त्वमपि एवमाशंससे, पश्य ।

( ३ ) दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्य्योधनस्य च यथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्द्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥

कः कोऽत्र भोः ? जैत्रं (४) मे रथमुपपादय तावत्, यावदहमपि [ ] तस्य प्रगल्भस्य पाण्डवस्य मिथ्याप-

---

(१) कोदण्डस्य चापस्य ज्याया किणः घर्षणजात घाँटेति प्रसिद्धः अङ्को येषां तैः कङ्कटेन सन्नाहेन उन्मुक्तं रहितं देहं येषामात्म शौर्य्य-गौरवात् सन्नाहमकुर्व्वाणैरिति भावः । प्रचलन्ती यासिलता तया दन्तुराणां निम्नोन्नतानां चमूनां कोटयः शतलक्षपरिमिताः सेनाः भ्रातृभिराक्रान्ताः पतन्ति भूमौ शेरते इत्यर्थः ।

(२) विज्ञातः पाण्डुसुतानां प्रभावो ययेति सोपहासमिदं तेषां प्रभावो नास्त्येव तत्त्वयाप्यनुभूतमिति भावः ।

(३) तेषां प्रतिज्ञापूरणाभावेन अप्रभावत्वं दर्शयति दुःशासने त्यादि । हृदयस्य क्षतजं रुधिरमेवाम्बु तस्य पाने, दुर्य्योधनस्य मम चोरुभङ्गे यथा प्रतिज्ञा न सफला तथेयमपि न फलिष्यतीति भावः ।

(४) जैत्रं जयसाधनम् ।

---

[ जयद्रथपरिरक्षणेन ]

तिज्ञावैलक्ष्य (१) सम्पादितमशस्त्रपूतं मरणमुपदिशामि।

प्रविश्य कञ्चुकी। देवि!

(२) उद्घातक्वणितविलोलहेमघण्टः
प्रालम्बद्विगुणितचामरप्रहासः।
सज्जोऽयं नियमितवल्गिताकुलाश्वः
शत्रूणां क्षपितमनोरथो रथस्ते॥

राजा। देवि! प्रविशत्वभ्यन्तरमेव, यावदहमपि। तस्य प्रगल्भस्येत्यादि पठित्वा परिक्रामति।

इति निष्क्रान्ताः सर्वे।

द्वितीयोऽङ्कः।

---

(१) मिथ्या सूर्यास्तसमयसध्ये जयद्रथावधेन विफलया प्रतिज्ञया यत् वैलक्ष्यं लज्जा तेन सम्पादितम् अशस्त्रपूतं शस्त्रेण मरणं हि क्षत्रियाणां पवित्रं तस्य चात्मघातित्वेन शस्त्रेण न पूतम् अश्राद्धभोजीत्यादिवदसमर्थेनापि नञा समासः। वैलक्ष्यं सम्पादयन्निति पाठे तत्कुर्व्वन्नित्यर्थः।

(२) उद्घात आघातस्तेन क्वणिता शब्दायिता विलोला हेमघण्टा यत्र। प्रालम्बस्य लम्बमानस्य द्विगुणितस्य पार्श्वद्वये द्विधा बद्धस्य चामरस्य प्रहासः प्रकाशो यत्र अथ वा चामरः प्रहास इव शुभ्रत्वात् यत्रेति समासः। नियमिता यन्त्रिता अतएव वल्गिता गतिभेदेन चलिता आकुला अश्वा यत्र।

इति श्रीतारानाथतर्कवाचस्पति भट्टाचार्य्य
विरचिते वेणीसंहारनाटक व्याख्याने
विप्रलम्भाख्योद्वितीयोऽङ्कः।

# तृतीयोऽङ्कः ।

ततः प्रविशति विकृतवेशा राक्षसी ।

रा:क्ष । विकृतं विहस्य, सपरितोषम् ।

हदमाणुसमंससोणिदेहिं कुम्भसहस्सं बसाहिं संचिदं ।
अणिसं अ पिबामि सोणिअं समले बलिससदं हुबीअदु ॥

इति नृत्यन्ती सपरितोषम् ।

जइ सिन्धुराअबहदिअहे बिअ दिबहे दिबहे समलकम्म प्पडिबज्जइ अज्जुणे,तदो पज्जत्तभलिदकोट्ठागाले मंससोणिदेहिं मे गेहे हुविस्सदि । परिक्रम्य दिशोऽवलोक्य । अध कहिं णु लुहिलप्पिए हुबीअदि । ता जाव इमस्सिं समले पिअभत्तालं लुहिलप्पिअं अस्सेसामि । परिक्रम्य । होदु सद्दाबइस्सं दाव । लुहिलप्पिआ लुहिलप्पिआ ! इदो एहि इदो एहि । ( क )

---

(क) हतमानुषमांसशोणितैः कुम्भसहस्रं वसाभिः सञ्चितम् अनिशञ्च पिबामि शोणितं, समरं वर्षशतं भवतु । यदि सिन्धुराजवधदिवस इव दिवसे दिवसे समरकर्म्म प्रतिपद्यतेऽर्ज्जुनः, ततः पर्य्याप्तभरितकोष्ठागारं मांसशोणितैर्मम गृहं भविष्यति । अथ कुत्र रुधिरप्रियो भविष्यति । तद्यावदस्मिन् समरे प्रियभर्त्तारं रुधिरप्रियमन्वेषयामि । भवतु शब्दायिष्ये तावत् । रुधिरप्रिय ! रुधिरप्रिय ! इत एहि, इत एहि भरितं पूर्णं कोष्ठागारं धान्यादिस्थापनस्थानं कुटीति प्रसिद्धं यस्य गृहस्य तत् । तत् । रुधिरप्रिया इति दूराह्वानाय प्लुतस्वरसूचनार्थमाकारान्ततयोक्तम् ।

ततः प्रविशति तथाविधो राक्षसः।

राक्ष भ्रमणं नाटयन्। पच्चग्गहदाणं मंसए जइ उह्णे लुहिले अ लंभइ ता एसो मह पलिस्समे क्खणमेत्तं एव्व लहु णस्सइ। (क)

राक्षसी। पुनर्व्याहरति।

राक्ष। आकर्ण्य। अले! के एसे मं सद्दाबेदि। विलोक्य ?। अले! कहं वसागन्धा। उपसृत्य। वसागन्धे! मं कीस सद्दावसि? (ख)

राक्ष। लुहिलप्पिआ एदं क्खु तुह कालणादो पच्चग्गहदस्स कस्स वि लाएसिणो सलीलावअवप्पहुदं प्पहुदवसासिणिद्धचिक्कणं कोह्णं लुहिलं अग्गमंसं अ आणीदं ता पिबाहि णम्। (ग)

राक्ष। सपरितोषम्। साहु वसागन्धे! साहु, सोहणं तुए किदं बलिअह्मि पिबासिए जं कोसिणं कोसिणं लुहिलं आणीदम्। (घ)

---

(क) प्रत्यग्रहतानां मांसं यद्युष्णं रुधिरञ्च लभ्येत तदेष मम परिश्रमः क्षणमात्रमेव लघु नश्येत्। प्रत्यग्रमभिनवम्।

(ख) अरे! का एषा मां शब्दायते। अरे! कथं वसागन्धा। वसागन्धे! मां कस्मात् शब्दायसे।

(ग) रुधिरप्रिय! इदं खलु तव कारणात् प्रत्यग्रहतस्य कस्यापि राजर्षेः शरीरावयवप्रभूतं प्रभूतवसास्निग्धचिक्कणं कोष्णं रुधिरमग्रमांसञ्च आनीतं, तत् पिबैनत्।

(घ) साधु वसागन्धे! साधु, शोभनं त्वया कृतं बलवदस्मि पिपासितः, यत् कोष्णं कोष्णं रुधिरमानीतम्। बलवदतिशयितम्।

राच । लुहिलप्पिआ ! एदिसे हदणलगअतुलङ्गमसोणिअवसासमुद्ददुस्संचले समलाङ्गणे पड़िव्भमन्ते तुमं पिवासिएसि त्ति अच्चलिअं । ( क )

राच । सक्रोधम् । अले वसागन्धे ! पुत्तघड़क्कअसोअसन्तत्तहिअअं सामिणीं पेक्खिदुं गदह्मि । ( ख )

राच । लुहिलप्पिआ ! अज्जवि सामिणीए हिड़िम्बादेवीए घड़क्कअसोए ण उपसम्मइ । ( ग )

राच । अइ ! कुदो से उवसमे किंपु अहिमम्बुवहसोअसमानदुक्खाए सुभद्दादेवीए जस्सेणीए अ समास्सासीअदि । ( घ )

राच । लुहिलप्पिआ ! गेह्न एदं हत्थिसिलक्कवालसंचिअं अग्गमंसोवदंसं पिबाहि णव सोणिआसवं । ( ङ )

---

( क ) रुधिरप्रिय ! ईदृशे हतनरगजतुरङ्गमशोणितवसासमुद्रदुःसञ्चरे समराङ्गणे परिभ्रमन् त्वं पिपासितोऽसि इति आश्चर्यम् आश्चर्यम् ।

( ख ) अयि वसागन्धे ! पुत्रघटोत्कचशोकेन सन्तप्तहृदयां हिडम्बादेवीं प्रेक्षितुं गतोऽस्मि ।

( ग ) रुधिरप्रिय ! अद्यापि स्वामिन्या हिड़म्बादेव्या घटोत्कच शोको नोपशाम्यति ।

( घ) अयि ! कुतोऽस्या उपशमः किन्तु अभिमन्युवधशोकसमान दुःखया सुभद्रादेव्या याज्ञसेन्या च समाश्वास्यते ।

( ङ ) रुधिरप्रिय ! गृहाणैतत् हस्तिशिरःकपालसञ्चितमग्रमांसोपदंशं पिब नवशोणितासवम् । उपदंशस्तृतीयायाम् ३, ४, ४७, पा०सू० । ल्यप् मांसेन सहोपदश्यार्थात् मांसेन सह भुक्तं स्वयंः नवशोणितमासवमिव स्वादुत्वात् अतएवोपदंशसाहित्यमुक्तम् ।

राच। तथा कृत्वा। वसागन्धे! अह किअ प्पहुदं तुए सञ्चिअं लुहिलं अग्गमंसं अ। (क)

राच। अले लुहिलप्पिआ! पुव्वसंचिअं तुमं जेव्व जाणासि णवसञ्चिअं सिणु। भअदत्त सोणिअकुम्भे सिन्धुलाअवसाकुम्भे दुवे मच्छाहिव भुलिस्सवसोमदत्तवल्ली-अप्पमुहाणं णलिन्दाणं पाकिदपुलिसाणं अ लुहिलवसा-मंसस्स घटा अविणद्दमुहा सहस्ससंक्खा सन्ति मे गेहे। (ख)

राच। सपरितोषमालिङ्ग्य। साहु सुग्घलिणि! साहु, इमिणा दे सुग्घलिणीत्तणेण अज्ज उण सामिणीए हिड़िम्बादेवीए संविहाणेण अ प्पणट्टं मे दालिद्दं। (ग)

राच। लुहिलप्पिआ! केलिसे सामिणीए संविहाणए किदे। (घ)

राच। (ङ) अज्ज अहं सामिणीए हिड़िम्बादेवीए सबहुमाणं सद्दाविअ आणत्ते जहा लुहिलप्पिआ! अज्ज प्पहुदि अज्जउ-

---

(क) वसागन्धे! अथ कियत् प्रभूतं त्वया सञ्चितं रुधिरमग्रमांसञ्च।

(ख) अयि रुधिरप्रिय! पूर्वसञ्चितं त्वमेव जानासि नवसञ्चितं शृणु, भगदत्तशोणितकुम्भः सिन्धुराजवसाकुम्भौ द्वौ मत्स्याधिप भूरिश्रवः सोमदत्तवाह्लीकप्रमुखाणां नरेन्द्राणां प्राकृतपुरुषाणाञ्च रुधिरवसामांसस्य घटाः अपिनद्धमुखाः सहस्रसंख्याः सन्ति मे गेहे। अपिनद्धमावृतं मुखं येषां ते। बहुकालस्थापनाय मुखावृतिः।

(ग) साधु सुगृहिणि! साधु अनेन ते सुगृहिणीत्वेन स्वामिन्या हिड़िम्बादेव्याः संविधानेन च प्रनष्टं मे दारिद्र्यम्।

(घ) रुधिरप्रिय! कीदृशं स्वामिन्या संविधानं कृतम्। संविधानं नियोगः।

(ङ) अद्याहं स्वामिन्या हिड़िम्बादेव्या सबहुमानं शब्दाय्य आज्ञप्तः

त्तस्स भीमसेणस्स पिट्ठदो अणुपिट्ठं समणे तुए आहिण्डिदव्व त्ति। ता तस्स अणुमग्गगामिणो हदमाणुससोणिअणइदंसणप्पणट्ठबुभुक्खापिवासस्स इह एव्व मे सग्गलोओ हुवीअदि तुमं वि विस्सद्दा भविअ लुहिलवसाहिं कुम्भसहस्सं सव्वेहि।

राच। लुहिलप्पिआ! किं णिमित्तं कुमाल भीमसेणस्स पिट्ठदो अणुपिट्ठं आहिण्डीअदि (क)

राच। बसागन्धे! तेण हि सामिणा विओदलेण दुस्सासणस्स लुहिलं पादुं पड़िण्णादं तच्च अम्मेहिं लक्खसेहिं अणुप्पविसिअ पादव्वं त्ति। (ख)

राच। सहर्षम्। साहु सामिणिए! साहु सुसंविहाणे मे भट्टा तुए किदे। (ग) नेपथ्ये। महान् कलकलः। उभावाकर्णयतः।

राच। आकर्ण्य ससंभ्रमम्। अले लुहिलप्पिआ! किं णु क्खु एसे महन्ते कलकले सुणीअदि। (घ)

---

यथा रुधिरप्रिय! अद्य प्रभृति आर्यपुत्रस्य भीमसेनस्य पृष्ठतोऽनुपृष्ठं समरे त्वया आहिण्डितव्यमिति तत्तस्य अनुमार्गगामिनः हतमानुषशोणितनदीदर्शनप्रनष्टबुभुक्षापिपासस्य इहैव मे स्वर्गलोको भवति त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं सञ्चिनु। आहिण्डितव्यं भ्रमितव्यमित्यर्थः।

(क) रुधिरप्रिय! किं निमित्तं कुमारभीमसेनस्य पृष्ठतोऽनुपृष्ठमाहिण्ड्यते।

(ख) वसागन्धे! तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं, प्रतिज्ञातं तच्चास्माभिः राक्षसैः अनुप्रविश्य पातव्यमिति।

(ग) साधु स्वामिनि! साधु! सुसंविधानो मे भर्त्ता त्वया कृतः।

(घ) अरे रुधिरप्रिय! किं नु खल्वेष महान् कलकलः श्रूयते।

राच। हृष्टा। बसागन्धे! एसे धिट्ठज्जुम्णेण दोणे केसेसु आकड्डिअ असिवत्तेण बाबादीअदि।(क)

राच। सहर्षम्। लुहिलप्पिआ! लुहिलप्पिआ! अह्मे वि गच्छिअ दोणस्स लुहिलं पिवह्म। (ख)

राच। सभयम्। बसागन्धे! बह्मणसोणिअं क्खु एदं गलं दहन्तं पविसदि ता किं एदिणा (ग)

नेपथ्ये। पुनः कलकलः।

राच। लुहिलप्पिआ! पुणो वि एसे महन्ते कलअले सुणीअदि (घ)

राच। नेपथ्याभिमुखमवलोक्य। बसागन्धे! एसे क्खु अस्स-त्थामे आकड्डिदासिवत्ते एदो ज्जेव आअच्छदि कदावि दुव-दसुदलोसेण अह्मे वि बावदइस्सदि, ता एहि सामिणीए हिड़म्बादेवीए आणत्तिं कलेह्म। (ङ) इति निष्क्रान्तौ प्रवेशकः।

---

(१) "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथेति" दर्पणोक्तेः अनुदात्तस्वरेण नीचपात्रप्रयुक्तत्वात् वृत्तानां सिन्धुराजादिवधानां वर्त्तिष्यमाणदुःशासनवधादेः कथांशस्य सूचनरूपविष्कम्भलक्षणवत्त्वात् द्वितीयतृतीयाङ्कयोर्मध्ये वर्त्तित्वाच्च प्रवेशकनामकं नाटकाङ्गम्।

---

(क) वसागन्धे! एष धृष्टद्युम्नेन द्रोणः केशेषु आकृष्य असिपत्रेण व्यापाद्यते।

(ख) रुधिरप्रिय! रुधिरप्रिय! वयमपि गत्वा द्रोणस्य रुधिरं पिवामः।

(ग) वसागन्धे! ब्राह्मणशोणितं खल्वेतत् गलं दहत् प्रविशति तत् किमेतेन।

(घ) रुधिरप्रिय। पुनरपि एष महान् कलकलः श्रूयते।

(ङ) वसागन्धे! एष खलु अश्वत्थामा आकृष्टासिपत्र इतएवागच्छति

ततः प्रविशत्युत्खातखड्गः (१) कलकलमाकर्णयन्नश्वत्थामा ।

अश्व । (२) महाप्रलयमारुतक्षुभितपुष्करावर्त्तक

प्रचण्डघनगर्ज्जितप्रतिरुतानुकारी मुहुः ।

रवः श्रवणभैरवः स्थगितरोदसीकन्दरः

कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥

विचिन्त्य । ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रान्तमर्य्यादेन परिकोपितस्तातः समुल्लङ्घ्य शिष्यप्रियतामात्मसदृशभाव माचेष्टते । तथाहि ।

(३) यद्दुर्य्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे

रामाल्लब्धसमस्तहेतिगुरुणो वीर्य्यस्य यत् साम्प्रतम् ।

लोके सर्वधनुष्मतामधिपतेर्यच्चानुरूपं रुषः ।

प्रारब्धं रिपुघस्मरेण नियतं तत् कर्म्म तातेन मे ॥

---

(१) कलकलमाकर्ण्यन् उत्खातखड्गः उत्खातः कोषादुद्धृतः खड्गो येन ।

(२) क्षुभितौ चालितौ पुष्करावर्त्तकौ प्रलयकालिकौ मेघभेदौ । तयोः प्रचण्डघनगर्ज्जितं भीषणनिरन्तरस्तनितं तेन स्थगितं प्रतिध्वनिशब्देन व्याप्तम् रोदस्यौ द्यावापृथिव्यावेव कन्दरं दरी येन समरमेवोदधिस्तस्मात् अभूतपूर्व्वः पूर्व्वं न भूतः पुरः अग्रे कुतः कस्मात् कारणात् । अयं श्रूयमाणः रवः ।

(३) दुर्य्योधनस्य पक्षपात आनुकूल्यं साहाय्यकरणमिति यावत् तत्सदृशं तदनुरूपम् अस्त्रग्रहे शस्त्रग्रहणे च यदुचितं रामात् परशुरामाल्लब्धाभिः समस्तहेतिभिः गुरुणो लब्धगौरवस्य वीर्य्यस्य साम्प्रतं यद्युक्तम् । सर्व्वधनुर्द्धारिणामधिपतेः रुषः क्रोधस्य यदनुरूपं, रिपुघस्मरेण शत्रुनाशकेन तातेन

---

कदाचित् द्रुपदसुतरोषेण अस्मानपि व्यापादयिष्यति तदेहि स्वामिन्या द्रौपद्याः देव्या आज्ञप्तिं कुर्म्मः ।

पृष्ठतो विलोक्य। तदलमिदानीं मम रथप्रतीक्षयाऽनया, सन्नद्धस्त्वास्मि सजलजलधरप्रभाभास्वरेण सुप्रग्रहविमलकलधौतत्सरुणा(१)खड्गेन यावत् समरभुवमवतरामि। परिक्रम्य। वामाक्षिस्पन्दनं सूचयित्वा। आः! कथं ममापि नाम(२)स्वत्यान्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्यानिमित्तानि(३) समरगमनविघ्नमुत्पादयन्ति, भवतु अवगच्छामि। सावष्टम्भं परिक्रम्य, अग्रतो विलोक्य। कथमवधीरितसकलक्षात्रधर्म्म(४)णामुत्सृष्टसत्पुरुषोचितलज्जावगुण्ठनानां(५) विस्मृतस्वामिसत्कारलघुचेतसां, (६) त्यक्त्वा द्विरदतुरङ्गमचरण-

---

तत्कर्म्माद्य प्रारब्धम्। नियतमित्युत्प्रेक्षायाम् एतावत्कालमुदास्तम् अधुनोक्तकर्म्म प्रारब्धमित्युत्प्रेक्षे अन्यथा इदृशः कोलाहलः कथं स्यादित्याशयः।

(१) सुप्रग्रहः सुखग्राह्यः विमलः कलधौतः तप्तकाञ्चननिर्म्मितः त्सरुः मुष्टिस्थानं यस्य तादृशेन खड्गेन "रश्म्यादिरश्मौ रश्मौ च प्रग्रहः सुग्रहेऽपि चेति" विश्वः। "त्सरुः खड्गादि मुष्टौ स्या"दित्यमरः।

(२) नाम सम्भावनायां कथं शब्देन तस्य योगस्तेन विघ्नमुत्पादयन्तीति कथं सम्भाव्यते नैव सम्भाव्यते इत्यर्थः।

(३) अनिमित्तानि दुर्निमित्तानि "तत्सादृश्यं विरोधश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्त्तिता" इत्युक्तेरप्राशस्त्ये इह नञ्।

(४) क्षात्रधर्मणामित्यत्र धर्म्मादनिच् केवलात् (५, ४, १२४ सू० पा०) अनिच्। धर्म्माणामिति पाठे तु समासान्तविधेरनित्यत्वान्नानिच्।

(५) सत्पुरुषैरुचिताऽभ्यस्ता चिरपरिचिता या लज्जा सा अवगुण्ठनमिवावरणमिव तदुत्सृष्टं यैः।

(६) विस्मृतः स्वामिसत्कारो भर्तृसम्मानो यैरत एव लघु क्षुद्रं चेतो येषां ते पश्चात् कर्मधारयः तेषाम्।

चारिणाम् (१) अगणितकुलवयः सदृशपराक्रमव्रतानां रण-भूमेः समन्तादपक्रामता (२) मयं महान् नादो बलानाम्। अन्यतोऽवलोक्य। हा धिक् कष्टम्! कथमेते महारथाः कर्णादयोऽपि समरात् पराङ्मुखा भवन्ति। साशङ्कम्। कथं नु ताताधिष्ठितानामपि बलानामियमवस्था भवेत्, भवत्वेवं तावत्, भो भोः कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा नरपतयः! कृतं कृतं (३) समरपरित्यागसाहसेन।

(४) यदि समरमपास्य नास्ति मृत्यो
र्भयमिति युक्तमितोऽन्यतः प्रयातुम्।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम्॥

अपिच।(५)अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्व्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम्।
कर्णालं संभ्रमेण व्रज कृप! समरं मुञ्च हार्द्दिक्य! शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः?॥

---

(१) त्यक्तौ द्विरदतुरङ्गमौ यैः तथाभूताः सन्तश्चरणाभ्यां चरन्तीति तेषाम्।

(२) रणभूमेः अपक्रामताम् पलायमानानाम् "अपक्रमोऽपयानं स्या"दित्यमरः।

(३) कृतं क्लीवन्तु निष्फले इति विश्वः। वीप्सायां द्वित्वम्।

(४) इतः समरात्। इह युक्तिरलङ्कारः "अर्थावधारणं यत्तु प्रमाणात् युक्तिरिष्यते" इति भरतोक्तेः।

(५) अस्त्रं ज्वाला शिखेव तया अवलीढ आक्रान्तः प्रतिबलं प्रतिकूलसैन्यं जलधिरिव प्रतिभटसमुद्रस्तस्यान्तर्मध्ये और्व्वायमाणे वाड़वानल इवा-

नेपथ्ये। कुतोऽद्यापि ते तातः ?

अश्व। श्रुत्वा। किं ब्रूथ ? कुतोऽद्यापि ते तात इति। आः क्षुद्राः समरभीरवः ! कथमेवं प्रलपतां वः सहस्रधा न दीर्ण-मनया जिह्वया।

(१)दग्धुं विश्वं दहनकिरणै र्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः।
छन्नं मेघै र्न गगनतलं पुष्करावर्त्तकाद्यैः
पापं पापाः कथयत कथं शौर्य्यराशेः पितुर्मे॥

---

चरति सर्वधन्वीश्वराणां गुरौ। सेनापतौ स्थिते सति संभ्रमेण भयेनालम् भयसाध्यं नास्ति। कर्णस्य भीरुतया रणभङ्गस्य पक्षिह्नतया प्राक् निवारणम् हार्द्दिक्य ! हृदिकापुत्र ! कृतवर्म्मन् ! शङ्कां भयं मुञ्च। मातृनामसंबोधनेन भीरुत्वं सूचितम्। भयाभावे हेतुमाह ताते इत्यादि चापे द्वितीये धनुर्मात्रसहाये रणधुरां रणभारं रणाग्रयायित्वमिति यावत् वहति सति भयस्य कोऽवकाशः स्थानम् न कोऽपीत्यर्थः।

(१) दहनाः दाहकराः किरणास्तैः द्वादश अर्काः सूर्य्याः "धाता मित्रोऽर्यमा रुद्रो वरुणः सूर्य्य एव च। भगो विवस्वान् पूषा च सविता दशमः स्मृतः॥ एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते" इत्युक्ताः। सप्त धा ता मरुतः सप्तधा भिन्नाः ऊनपञ्चाशद्धा भिन्नाः सन्तः नो वाताः गच्छन्ति "मरुतोनाम ते देवा गणा ये सप्तसप्तकाः। ऊनपञ्चाशत् -वायवश्च हेमाद्रौ व्रतखण्डे ध्यानप्रकरणे सलक्षणा दर्शिता इह नामतस्तेऽभिधीयन्ते श्वसनः१ स्पर्शनः२ वायुः३ मातरिश्वा४ सदागतिः५ महाबलः६ बलवर्द्धनः७ पृषदश्वः८ गन्धवहः९ गन्धवाहकः१० अनिलः११ आशुगः१२ सुरुखः१३ कर्करः१४ समी-क्षणः१५ समीरणः१६ अनुत्तमः१७ मारुतः१८ नागयोनिजः१९ जगत्-प्राणः२०पावकः२१ वातः२२ प्रभञ्जनः२३ पवमानः२४ नभस्वान्२५ अतिबलः२६ तरस्वी२७ द्राव शः२८ देवपचकः२९ पात्रवाहकः३० रथवाट्३१ ऊर्द्ध्वहक्३२

प्रविश्य संभ्रान्तः सप्रहारः सूतः। परित्रायतां परित्रायतां कुमारः। इति पादयोः पतति।

अश्व। विलोक्य। अये! तातस्य सारथिरश्वसेनः। आर्य्य! त्रैलोक्यत्राणक्षमस्य सारथिरसि किं मत्तः शिशुजनात् परित्राणमिच्छसि।

सूत। उत्थाय, सकरुणम्। कुमार! कुतोऽद्यापि ते तातः?

अश्व। सावेगम्। किं [ तातो नामास्तमुपगतः? ]

सूत। अथ किम्?।

अश्व। हा तात! हा तात! इति मोहमुपगम्य पतितः।

सूत। कुमार! समाश्वसिहि समाश्वसिहि।

अश्व। लब्धसंज्ञ उत्थाय सास्रम्। हा तात! हा सुतवत्सल! हा लोकत्रयैकधनुर्धर! हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन्। [

---

गतिरोधनः३३ पावकः३४ साधकः३५ विश्वपूरकः३६ जगदाश्रयः३७ विश्वातिरेकी३८ प्रजागरः३९ विश्वोदरः४० अपगः४१ तोत्रकः४२ असुरहा४३ विश्ववर्द्धनः४४ भद्रजवः४५ पुष्करजः४६ अग्निनीपतिः४७ व्यक्तमूर्त्तिः४८ विश्वगः४९ इति। पुष्करः आवर्त्तकः संवर्त्तः द्रोण एते मेघनायका प्रलयकाले स्वस्वगणैः सह मिलिता वर्षन्ति तेषामुत्पत्तिमभिधाय: पुष्करावर्त्तकास्तेन कारणेनेह विश्रुताः। नानारूपधरास्ते तु महाघोरस्वनास्तथा॥ कल्पान्ते वृष्टिकर्त्तारः संवर्त्ताग्नेर्नियामका" इति ब्रह्माण्डपुराणे ५८ अध्याये द्रष्टव्यम्। प्रलयकालेएव द्वादशादित्यादेरुदयात् तदभावे कथं गुरोः पापमनिष्टं मरणं वदत तथा च प्रलयकालं विना तस्य मरणं न संभवतीत्याशयः।

---

[ तात एव नास्ति ] क्वचिदित्येव पाठः।

[ क्वासि प्रयच्छ मे प्रतिवचनम्। ] इतिक्वचिदधिकः पाठः।

सूत । कुमार ! अलमत्यन्तशोकावेगेन, वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि त्वदनुरूपेणैव वीर्य्येण शोकसागरमुत्तीर्य्य सुखीभव ।

अश्व । अश्रूणि विमुच्य । आर्य्य ! कथय कथय कथं तादृग्भुजवीर्य्यसागरस्तातोऽपि नामास्तमुपगतः । (१)
किं भीमाद्गुरुदक्षिणां गुरुगदां भीमप्रियः प्राप्तवान् ?

सूत । शान्तं पापम् ।

अश्व । अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ।

सूत । कथमेवं भविष्यति ।

अश्व । गोविन्देन सुदर्शनस्य नियतं धारापथं प्रापितः ?

सूत । तदपि नास्ति ।

अश्व । शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ।

सूत । कुमार !

(२)एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये ।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदास्य विहितं रिपुणातिघोरम् ॥

---

(१) भीमप्रिय इत्यनेन तत्प्रियत्वेन स्ववीर्य्यं न प्रकाशितमतो भीमेन यथेष्टमाचरितमिति भावः एवम् अन्तेवासिदयालुत्वमपि उपेक्षायां बीजम् जिष्णुना अर्जुनेन आसादितः व्यापादितः ।

(२) महास्त्रपाणेरित्यनेनास्त्रधारणेऽयं तैरपि दुर्जय इति सूचितम् । अतिघोरं नृशंसत्वं त्यक्तास्त्रस्य हिंसनमनार्य्यं कार्य्यम् । रिपुणा तद्वधार्थमेवोत्पन्नेन सहजरिपुणा धृष्टद्युम्नेन विहितम् शस्त्रत्यागे हेतुमाह

अश्व। किं पुनः कारणं शोकस्य अस्त्रपरित्यागस्य वा?

सूत। ननु कुमार एव कारणम्।

अश्व। कथमहमेव?

सूत। अश्रूणि विमुच्य। श्रूयताम्,

(१) अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा।
तच्छ्रुत्वाऽसौ दयिततनयः प्रत्ययात्तस्य राज्ञः।
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच॥

अश्व। हा तात! हा सुतवत्सल! हा वृथामदर्थं-परित्यक्तजीवित! हा शौर्य्यराशे! हा शिष्यप्रिय! हा युधिष्ठिरपक्षपातिन्! इति रोदिति।

सूत। कुमार! अलमत्यन्तपरिदेवनकार्पण्येन।

अश्व। (२) श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात! त्वया सह शरीरसवो विमुक्ताः।

---

शोकेत्यादि। शोकेन उपरुद्धं व्याप्तं हृदयं यस्य तथाभूतेन शोकार्त्तस्य शस्त्रत्यागः समुचित इति भावः।

(१) शेषे वाक्यस्यावसाने गजइति पदं स्वैरं स्वेच्छया न तु परबोधेच्छया तेनान्यस्त्रवणायोग्यता तथाच अस्पष्टमित्यर्थः। अतएव तस्य न सत्यवादिताव्याघातइति सूचयन् विशिनष्टि सत्यवाचेति तत् अश्वत्थामा हतइति स्पष्टं वाक्यावयवं श्रुत्वा तस्य राज्ञः प्रत्ययात् सत्यवादित्वविश्वासात् आजौ शस्त्राणि चक्षुर्जलञ्च तुल्यमेकदैव मुमोच। इह अभूताहरणनामा गर्भसन्धिः यथोक्तं भरतेन "उक्तं भूतञ्च यद्वाक्यमभूताहरणन्तु त"दिति।

(२) मम मिथ्यामरणश्रवणान्मुक्तप्राणस्य तव सत्यं मरणेऽपि जीवतो

जीवाम्यहं पुनरयं भवता वियुक्तः
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥

इति मोहमुपगतः।

समाश्वसितु समाश्वसितु कुमारः।

ततः (१) प्रविशति सोद्वेगः कृपः।

कृप। (२) धिक् सानुजं कुरुपतिं धिगजातशत्रुं
धिग् भूपतीन् विफलशस्त्रभृतो धिगस्मान्।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥

तत् कथं नु खलु वत्सं द्रक्ष्याम्यश्वत्थामानम्,

---

मम अयथाचरणात् क्रूरत्वं तादृशे क्रूरे मयि तव पक्षपातःस्नेहः मुधा वृथेत्यर्थः।

(१) अजं कृप! समरमित्यनेन कृपस्य सूचनात् ततः प्रविशतीत्युक्तिः सङ्गच्छते सूचितप्रवेशस्यैव नाट्ये प्रवेशनस्य पूर्वं भरतवाक्येन प्रतिपादितत्वात्।

(२) तदा द्यूतकाले द्रौपद्याः, अद्य च द्रोणस्य केशग्रहः बलात्कारेण केशधारणं, यैः शस्त्रभृद्भिर्भूपतिभिरस्माभिश्च लिखितैः चित्रन्यस्तैरिव वीक्षितः न तु प्रतीकारार्थं चेष्टितं तान् भूपतीन् अस्मांश्च धिक् शस्त्रभृत्त्वविशेषणेन प्रतीकारक्षमतासामर्थ्येऽपि तदकरणेनातिनिन्दितत्वमिति सूचितम्। दुष्कर्मद्रष्टृपेक्षया तत्कर्त्तुः निन्दिततरत्वात् प्रथमनिर्द्देशः तत्रापि क्रमप्राप्तद्रौपदी केशग्रहकर्त्तुः कुरुपतेः प्राथम्येन, द्वितीयकेशग्रहहेतुकर्त्तुर्युधिष्ठिरस्य परतोनिर्द्देशः। कुरुपतेरपि स्वयं केशग्रहाकर्तृत्वात् सानुजमिति विशेषणम्।

अथवा हिमवत् (१) सारगुरुचेतसि ज्ञातलोकस्थितौ तस्मिन् न खलु शोकावेगमहमाशङ्के, किन्त्वसदृशं पितुः पराभवमुपश्रुत्य किं व्यवस्यतीति न जाने अथवा,

(२)एकस्य [ ] तावत् पाकोऽयं दारुणो भुवि वर्त्तते ।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः ॥

विभाव्य । तदयं वत्सस्तिष्ठति, यावदुपसर्पामि । उपसृत्य ससंभ्रमम् । वत्स ! समाश्वसिहि समाश्वसिहि ।

अश्व । संज्ञां लब्ध्वा । सास्रम् । हा तात ! हा सकलभुवनैकगुरो ! आकाशे । युधिष्ठिर ! युधिष्ठिर !

(३) आ जन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषात्
सर्वं तदेकपद एव कथं निरस्तम् ॥

---

(१) हिमवतो हिमालयस्य सारमिव स्थिरांश इव गुरु धैर्यान्वितत्वात् अवष्टम्भि अचञ्चलमिति यावत् चेतो यस्य तादृशेऽस्मिन् अश्वत्थाम्नि ।

(२) एकस्य केशग्रहस्य द्रौपद्या इति शेषः । अयं प्रत्यक्षेणानुभूयमानः तावदित्युपक्रमेऽव्ययम् । उपक्रान्त इत्यर्थः । दारुणः अनिष्टबहुलः पाकः परिणामः संग्रामरूपं फलमित्यर्थः । द्वितीये द्रोणस्य केशग्रहे सति प्रजाः निःशेषिताः भविष्यन्तीति शेषः नूनमित्युत्प्रेक्षायाम् । इह उद्भेदाख्यं मुखाङ्गं यथोक्तं दर्पणे "रहस्यार्थस्य तूद्भेदः क्षेपः स्यादि"ति ।

(३) तत् द्वेष्टृत्वाभावः मिथ्यावादित्वाभावश्चेति द्वयम् एकपदे एकस्थाने एकस्मिन्नेव विषये इति यावत् द्विजवरे ब्राह्मणश्रेष्ठे शत्रुषु हीनेषु अपकृष्टेषु कथञ्चित्

---

[ एकस्यैव विपाकोऽयमिति दर्पणधृतपाठः । ]

सूत। कुमार! एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति।

अश्व। पार्श्वे विलोक्य सवाष्पम्। मातुल! मातुल!

(१) गतो येनाद्य त्वं सह रणभुवं सैन्यपतिना
य एकः शूराणां गुरुसमरकण्डूनिकषणः।
परीहासा श्चित्राः सततमभवन् येन भवतः
स्वसुः श्लाघ्यो भर्त्ता क्व नु खलु स ते मातुल! गतः॥

कृप। वत्स! परिगतपरिगन्तव्य (२) एव भवान् अल-मत्यन्तशोकावेगेन।

अश्व। मातुल! परित्यक्तमेव मया परिदेवनम्, (३)एषो-ऽहं सुतवत्सलं तातमेवानुगच्छामि।

कृप। वत्स! अनुपपन्नमिदं भवद्विधानाम्।

सूत। कुमार! अलमतिसाहसेन।

अश्व। आर्य्य! किमुच्यते।

(४) मद्वियोगभयात्तातः परलोकमितो गतः।
करोमि विरहं तस्य वत्सलस्य कथं पितुः॥

सम्भवदपि तादृशे तद्द्वयत्यागोऽत्यन्तमनुचित इति द्योतनाय विशेषणद्वयम् कथं केन कारणेन निरस्तम् न किञ्चिदन्यत् कारणं किन्तु ममैव भाग्यदोषात् नान्यकारणादित्यर्थः।

(१) शूराणां वीराणां गुरुसमरकण्डूनिकषणः। श्रेष्ठरणेच्छारूप कण्डूतिनिवारणः कण्डूः चुल्कुनीति प्रसिद्धव्रणभेदः। श्लाघ्यः प्रशंसनीयः ते स्वसुर्भर्त्ता भगिनीपतिः।

(२) परिगतं ज्ञातं परिगन्तव्यं वेदनीयं येन तथाभूतोऽतो न किञ्चिदा-वेद्यते इत्याशयः।

(३) विलापः परिदेवनमित्यमरः।

(४) वत्सलस्य मयि स्निग्धस्य विरहं मया सह वियोगं कथं करिष्ये

कृप। वत्स ! यावदयं संसारस्तावत् प्रसिद्धैवेयं लोकयात्रा,(१) यत् पुत्रैः पितरो लोकद्वयेऽप्य(२)नुवर्त्तनीया इति। पश्य। (३) निवापाञ्जलिदानेन वितानैः श्राद्धकर्म्मभिः।
तस्योपकारे शक्तस्त्वं किं जीवन् किमुतान्यथा॥

सूत। आयुष्मन् ! यदाह शारद्वतः।

अश्व। आर्य्य ! सत्यमेवेदं किन्त्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान् धारयितुं तद्गच्छामि तमेवोद्देशं यत्र तादृशमपि पितरं द्रक्ष्यामि। इत्युत्तिष्ठन् खड्गमालोक्य विचिन्त्य। अलमद्यापि शस्त्रग्रहणविद्यया। साञ्जमञ्जलिं बद्ध्वा। भगवन् शस्त्र !

(४) गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्यासीन्न खलु तव कश्चिन्न विषयः।

---

स्यापयिस्ये न परिहरिष्ये इत्यर्थः।

(१) लोकानां यात्रा समुदाचारेषु प्रवृत्तिः।

(२) लोकद्वयमिदं लोकपरलोकौ तत्र अनुवर्त्तनीयाः यथायथं वाक्यपालनश्राद्धादिभिरनुसरणीया आनुकूल्येन सेवनीया इति यावत्।

(३) ऐहिकोपकारस्य वाक्यपालनादेर्मृतपितुरसम्भवेन पारलौकिकमेवोपकारं दर्शयति निवापेति पितृदानं निवापः स्यादित्यमरः। निवापस्य पितृदानार्थः योऽञ्जलिः अन्नाद्यञ्जलिः जलाञ्जलिर्वा तस्य दानेन अश्वघास इत्यादिवत् निवापाञ्जल्योः प्रकृतिविकृति भावविरहेऽपि सम्बन्धविवक्षया षष्ठ्या समासः। वितानैः वृषाङ्कर्षैस्तदुद्देशेन त्यक्तमठादिगृहैर्वा श्राद्धकर्मभिश्च तस्य मृतस्य पितुरुपकारे जीवन् सन् किं शक्तः अन्यथा अजीवने कि मुत नैव समर्थ इत्यर्थः।

(४) येन द्रोणाचार्य्येण नोचितमपि अयुक्तमपि नजर्थस्य नञ्शब्दस्य स-

परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते ॥

इति परित्यज्य निष्क्रमति ।

नेपथ्ये । भो भो राजानः ! कथमिह भवन्तस्तत्रभवतः क्षत्रियगुरोर्भारद्वाजस्या ( १ ) सदृशं परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते ।

अश्व । आकर्ण्य, सक्रोधं शनैः खड्गं स्पृशन् । किं किं गुरोर्भारद्वाजस्य परिभवः ?

पुनर्नेपथ्ये । (२) आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकात्
द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य ।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिविरमयं याति सर्व्वैं सहध्वम् ॥

---

मासस्तेन नानादेशः 'शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो यत्रावरुध्यते' इति स्मृत्या धर्म्मावरोधे एव द्विजातेः शस्त्रधारणस्य विहितत्वेनान्यत्र तद्धारण-मनुचितमेवेति भावः । परिभवभयात् शत्रुकृतपराभवभयात् तन्निवारणा-र्थमेव गृहीतम् 'आततायिन मायान्तं हन्यादेवाविचारयन्' इति 'जिघां-सन्तं जिघांसीयादि'ति च स्मृतौ आत्मत्राणार्थमेव शस्त्रधारणं विहितमि-त्यत एव तद्धृतमित्यर्थः । यस्य प्रभावात् यद्धारणमाहात्म्यात् तव न विषयः अगोचरः कश्चिदपि नासीत् अत्रापि पूर्व्ववत् नशब्देन समासः । यतः यस्मात् तेन त्वं परित्यक्तमतः कारणात् अहमपि त्वां विमोक्ष्ये ते स्वस्त्यस्तु भवत्-कुशलमस्तु ।

( १ ) भारद्वाजस्य द्रोणस्य असदृशं परिभवमयोग्यं तिरस्कारं केशा-कर्षणरूपं नृशंसेन पापेन धृष्टद्युम्नेन प्रयुक्तं कृतं कथमुपेक्षन्ते औदासीन्येन न प्रतिकुर्व्वन्तीत्यर्थः ।

(२)पलितेन जरसा शुक्लकेशेन धवले मौलौ मस्तके पाणिं न्यस्य याति तत्

अश्व । सक्रोधम् । सकम्पञ्च कृपसूतौ दृष्ट्वा । किन्नामेदम् ?

( १ ) प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं व्रतमास्थितस्य ।
तातस्य मे पलितमौलि [ निरस्तकाशे ]
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥

कृप । वत्स ! एवं किल जनः कथयति ।

अश्व । किं तातस्य दुरात्मना परामृष्टमभूच्छिरः ?

सूत । सभयम् । कुमार ! आसीदयं तस्य तेजोराशेर्दैवस्य नवः परिभवावतारः ।

अश्व । हा तात ! हा पुत्रप्रिय ! मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः, अथवा,

( २ ) परित्यक्ते देहे रणशिरसि शोकान्धमनसा,
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ।
स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपो

---

बहुध्वं नेपथ्ये पूर्व्वोक्तस्य कथमित्यस्यात्राप्यनुषङ्गात् कथं क्षमध्वमित्यर्थः ।

( १ ) आत्तं गृहीतं धनुर्यैस्तेषाम् अनेन प्रतीकारक्षमत्वेऽपि प्रतीकाराकरणमयुक्तमिति सूचितम् । प्रायेण बाहुल्येन मरणार्थमुपवासाय उपवेशनं प्रायोपवेशनं क्रियाराहित्येन च तत् सादृश्यम् । पलितमौलिना पराजितकाशे अत्र पाठे पलितमौलिनेतिच्छेदः ।

( २ देहे परित्यक्ते परित्यक्तुमारब्धे प्रायोपवेशन इव निश्चेष्टतया स्थित्वा देहत्यागाय संकल्पकरणात् देहत्यागारम्भ इति बोध्यम् । स्फुरन्ति

---

[ नि मौलिस्थाने ] क्वचिदित्येव पाठः ।

येनैवायं पादः शिरसि निहितस्तस्य न करः॥

आः दुरात्मन् पाञ्चालापसद!

(१) तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्योत्तमाङ्गे।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते॥

अहो युधिष्ठिर! युधिष्ठिर! अजातशत्रो! अमिथ्यावादिन्! धर्म्मपुत्र! सानुजस्य ते किमनेनापकृतम्? अथवा किमनेनालीकप्रकृति (२) जिह्मचेतसा, अर्ज्जुन! सात्यके! बाहुशालिन्! वृकोदर! माधव! युक्तं नाम भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्व्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना

---

यानि दिव्यास्त्राणि तेषामोघः समूहएव द्रविणं धनं तेन यो मदस्तेन मत्तस्य कृत्याकृत्यविवेकशून्यस्य शिरसि अयमुत्तोलितः पादः निहितः निधातुं क्षिप्तः अथ वा अयं भूमौ पादपातनेन तच्छिरसि पातनवत् कृत्वाऽभिनीतः।

(१) पाण्डूनां पाण्डुपुत्राणां पाञ्चालानां पञ्चालजनपदराजानाम् उभयत्र तद्राजार्थकतद्धितस्य बहुषु लुक्। सेना एव तूलानि सुखसाध्यत्वात् तेषामुत्क्षेपे उपमर्द्दने प्रलयवायुः अस्य वेगत्वात् धृतधनुरित्यत्र समासान्तविधेरनित्यत्वान्नानङ्।

(२) अलीका असत्यप्रधाना या प्रकृतिस्तया जिह्मं कुटिलं चेतो यस्य तादृशेन तथा च सत्यवादिताख्यापनं छलमात्रं वितथवादिता तु तस्य स्वाभाविकी कथमन्यथा गुरौ द्विजवरे चेदृशासत्यवादिता स्यादिति भावः।

स्पृश्यमानमुत्तमाङ्गमुपेक्षितुम् अथवा सर्व्व एवैते पातकिनः किमेतैः।

(१) कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनाम्
अयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥

कृप। वत्स! किन्न सम्भाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्राम (२) कोविदे भवति।

अश्व। भो भोः पाण्डवमत्स्यसोमकमागधेयाः! क्षत्रियापसदाः!।

(३) पितुर्मूर्द्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम्।

---

(१) गुरुपातकं ब्रह्महत्यारूपं महापातकं न्यस्तशस्त्रतया आततायित्वाभावेन तद्वधे ब्रह्महत्यापातकमवश्यं भवतीत्याशयः। मनुजाः पशवश्च कृत्याकृत्यविवेकशून्यत्वात् तैःपशुतुल्यैः नरैरित्यर्थः निर्मर्य्यादैः संग्राममर्य्यादामतिक्रान्तैर्न्यस्तशस्त्रस्य हनने हि युद्धशास्त्रे मर्य्यादातिक्रमः प्रसिद्धः। उदायुधैः उद्धृतशस्त्रैः भवद्भिः सद्भिःशस्त्रधारिभिस्तन्निवारणं कर्त्तव्यं तच्च न कृतं प्रत्युतानुमतमित्यतोऽशेषा एव पापभागिन इति भावः। नरकस्य भूमिपुत्रस्यासुरस्य अतिदुर्ज्जयस्यापि रिपुणा केशवेन सार्द्धम् तेषां सर्व्वेषाम् अयं धृतास्त्रः अहम् असृञ्जि रक्तानि मेदांसि वपाः मांसानि च तैः दिशां दिग्देवतानां बलिं करोमि ददामीत्यर्थः।

(२) दिव्यास्त्राणां ब्रह्मास्त्रादीनां ग्रामे समूहे कोविदे दक्षे भवति त्वयि।

(३) अरीणां रुधिराणामासारः धारया सम्पातः स एव विषमं

किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म्म क्रोधान्धः प्रभवति विधातुं रणमुखे ॥

सूत। गच्छ त्वं सर्व्वोपकरणैः सांग्रामिकैः सर्व्वायुधैरुपेतं महाहवलक्षणं नामास्मत्स्यन्दनमुपनय।

सूत। यदाज्ञापयति कुमारः इति निष्क्रान्तः।

कृप। वत्स! अवश्यप्रतिकर्त्तव्येऽस्मिन् दारुणे परिभवाग्नौ सर्व्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्त्तुम्।

अश्व। किमतः परम्?

कृप। सैनापत्येऽभिषिक्तं भवन्तमिच्छामि समरभुवमवतारयितुम्।

अश्व। मातुल! परतन्त्रमिदमकिञ्चित्करञ्च।

कृप। वत्स! न खलु परतन्त्रं नाकिञ्चित्करञ्च पश्य।

(१) भवेदभीष्ममद्रोणं धृतराष्ट्रबलं कथम्।
यदि तत्तुल्यकर्म्माऽत्र भवान् धुर्य्यो न युज्यते॥

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं, किं पुनर्युधिष्ठिरबलं, तदेवं मन्ये परिकल्पि-

---

प्रीतिकरं यत्र तादृशं तत् पितृतर्पणरूपं कर्म्म रणमुखे विधातुं किमद्य न प्रभवति न शक्नोति अपितु समर्थ एव। शेषभोजनार्थकस्य विघसशब्दस्य तत् सदृशप्रीतिकरेऽत्र लाक्षणिकम्।

(१) तयोस्तुल्यं कर्म्म युद्धकर्म्म यस्य तादृशो भवान् यदि धुर्य्यो भारवाहकतया अत्र सैनापत्येन युज्यते न नियुज्यते नाभिषिच्यते इत्यर्थः "धुर्व्वहे धुर्य्यधौरेयधुरीणाः सधुरन्धरः" इत्यमरः।

ताभिषेकोपकरणः कौरवराजो न चिरात्त्वामिवाभ्युदीक्षमाण-स्तिष्ठतीति ।

अश्व । यद्येवं त्वरते मे परिभवानलदह्यमान मिदं चेत-स्तत्प्रतिकारजलावगाहनाय, तदहं गत्वा तातबधविषमसमा-नसं कुरुपतिं सैनापत्यस्वयं ग्रहणप्रणयसमाश्वासनया मन्द-सन्तापं करोमि ।

कृप । वत्स ! एवमिदम्, अतस्तमेवोद्देशं गच्छावः इति परिक्रामतः । ततः प्रविशतः कर्णदुर्य्योधनौ ।

दुर्य्यो । अङ्गराज ! (१) तेजस्वी रिपुहतबन्धुदुःखपारं,
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्य्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥

अथवा सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति, यतः, शो-कान्धचेतसा तेन विमुच्य क्षत्रधर्म्मकाकश्यं द्विजातिसुलभो मार्दवपरिग्रहः कृतः ।

कर्ण । राजन् कौरवेश्वर ! न खल्विदमेवम् ।

दुर्य्यो । कथं तर्हि ?

---

(१) रिपुणा हतस्य बान्धवस्य दुःखं तन्नाशजन्यशोकः तदेव सिन्धु-रित्यवसेयम् अन्यथा पारोडुपान्वयासम्भवात् । तस्य पारं धृतः आयुधा-न्येव प्लव उडुपः नदीसन्तरणसाधनम् भेलेति प्रसिद्धं याभ्यां ताभ्यां बाहुभ्यां व्रजति बाहुबलेनैव अपकर्त्तृशत्रोः प्रतीकारं कृत्वा दुःखं मन्दीकरोतीत्यर्थः । उडुपस्तु प्लवः कोलइत्यमरः ।

कर्ण। एवं किल द्रोणस्याभिप्राय आसीत् यथा अश्वत्थामा मया पृथिवीराज्ये अभिषेक्तव्य इति तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य।

(१) वृथा शस्त्र ग्रहणमिति तथा कृतवान्।

दुर्यो। सशिरःकम्पम्।। एवमिदम्?

कर्ण। एतदर्थञ्च कौरवपाण्डवपक्षपातप्रवृत्त महासंग्रामस्य (२) राजकस्य परस्परक्षयमुपेक्षमाणेन तेन प्रधानपुरुषबधे उपेक्षा कृता।

दुर्यो। उपपन्नमिदम्।

कर्ण। अन्यच्च राजन्! द्रुपदेन चास्य बाल्यात् प्रभृति अभिप्रायवेदिना न स्वराष्ट्रे वासो दत्तः।

दुर्यो। साधु अङ्गराज! निपुणमभिहितम्।

कर्ण। न चायं ममैकस्याभिप्रायः, अन्येऽभियुक्ता अपि नैवेदमन्यथा मन्यन्ते।

दुर्यो। एवमेतत् कः सन्देहः।

---

(१) ब्राह्मणस्येति सम्बन्धे षष्ठी न कर्त्तरि उभयप्राप्तौ कर्मणि (पा० २,३,६६ सू०) कर्मण्येव षष्ठीनियमनात् तेन शस्त्रग्रहणमित्यत्र षष्ठ्या समासः सूपपादः उभयप्राप्तौ कर्मण्येव विहित षष्ठ्या कर्म्मणि चेति (पा० २,२, १४ सू०) समासनिषेधात्।

(२) कौरवपाण्डवपक्षपातेन तदानुकूल्येन प्रवृत्तः संग्रामो यस्य तस्य राजकस्य राजसमूहस्य परस्परक्षयः परस्परेण क्षयो नाशस्तमुपेक्षमाणेन औदासीन्येनाप्रतिकुर्व्वता। तथा च एवं परस्परक्षयेऽवशिष्टानां स्वयं जयेन स्वाराज्य सिद्धिर्भविष्यतीति द्रोणाशय इति उद्भावितम्।

(१) दत्त्वाऽभयं सोऽतिरथो बध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत् कथमन्यथा ॥

कृप । विलोक्य । वत्स ! एष दुर्य्योधनः सूतपुत्रेण सह अस्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति तदुपसर्पावः । तथाकृत्वा,

उभौ । विजयतां विजयतां राजन् !

दुर्य्यो । दृष्ट्वा । अये ! कथं कृपोऽश्वत्थामा च । आसनादवतीर्य्य गुरो ! अभिवादये । अश्वत्थामानं प्रति । आचार्य्यपुत्र !

(२) एह्यस्मदर्थहततात ! परिष्वजस्व
कान्तैरिदं मम निरन्तरमङ्गमङ्गैः ।
स्पर्शस्तवैव भुजयोः सदृशः पितुस्ते
शोकेऽपि नो विकृतिमिति तनूरुहेषु ॥ आलिङ्ग्य पार्श्वे उपवेशयति ।

अश्व । वाष्पमुत्सृजति ।

कर्ण । द्रौणायने ! (३) अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम् ।

दुर्य्यो । आचार्य्यपुत्र ! को विशेष आवयोरस्मिन् व्यसनार्णवे, पश्य ।

---

(१) अतिरथो महारथः । एवं मदुक्तप्रकारस्तस्य यद्यभिसन्धिर्न स्यात्तदा कथमुपेक्षेत । अतिरथ इति विशेषणेन च तस्य सामर्थ्येऽपि उपेक्षा प्रागुक्ताभिसन्धि सूचिकेति दर्शितम् ।

(२) नोऽस्माकं तनूरुहेषु लोमसु विकृतिं हर्षेणोद्गमं रोमाञ्चमिति यावत् शोकेऽपीत्यनेन शोकाप्रतिरुद्धताकथनेनात्यन्तानन्दहेतुत्वं सूचितम् ।

(३) द्रोणस्यापत्यं द्रौणायनिः ।

(१) तातस्तव प्रणयवान् स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि।
किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥

कृप। वत्स! यथाह कुरुपतिस्तथैवैतत्।

अश्व। राजन्! एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्त्तुं, किन्तु,

मयि जीवति मत्तातः केशग्रहमवाप्तवान्।
कथमन्ये करिष्यन्ति पुत्रेभ्यः (२)पुत्रिणः स्पृहाम् ॥

कर्ण। द्रौणायने! किमत्र क्रियते यदा तेनैव सर्वपरिभवत्राणहेतुना शस्त्रमुत्सृजतैतादृशीमवस्थामात्मा नीतः।

अश्व। अङ्गराज! किमाह भवान् किमत्र क्रियते इति? श्रूयतां यत् क्रियते।

(३) यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुबलः पाण्डवीनां चमूनां

---

(१) मम पितुः प्रणयवान् स्नेहवान् सखा मित्रं तेन पितृस्थानीयत्वं सूचितं तेन तातवधेन गुर्व्वी शुक् शोको यस्य तादृशेन मनसा त्वं जानीहि परदुःखस्यान्येन प्रत्यक्षयितुमशक्यत्वात् यादृशं शोकवत्त्वमात्मनोऽनुभवसि तादृशं ममाप्यनुमिनु इति भावः।

(२) पुत्रेभ्य इत्यत्र स्पृहेरीप्सित (पा० १, ४, ३६, सूत्रेण) सम्प्रदाने चतुर्थी विद्यमानेन पुत्रेण स्वापमानस्याप्रतीकारे पुत्रिणः पुत्रोत्पादनव्यापारवन्तः। अपुत्रिण इति पाठस्तु समीचीनस्तेन पुत्रवतः पुत्रस्य सिद्धतया सिद्धे इच्छाविरहस्य यौक्तिकतया तत्र स्पृहाभावः सिद्ध एवेति कथमित्युक्तिर्नासङ्गतेति बोध्यम्।

(३) स्वभुजा एव गुरुबलं यस्य बाहुमात्रसहाय इत्यर्थः। पञ्चालगोत्रे

यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
योयस्तत्कर्म्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥

अपि च भो जामदग्न्यशिष्य, (१) कर्ण !

(२) देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥

---

पञ्चालजनपदराजवंशे निर्द्धारणे षष्ठी द्वन्द्वः सामासिकस्य चेतिवत् एकत्वेऽपि क्वचित् तस्याः साधुताया दृष्टत्वात् अथवा गोत्रस्य गोत्रप्रत्ययापत्यवर्गवाचितया समूहादिशब्दवत् एकत्वेऽबहुत्वात् निर्द्धारणषष्ठीसम्पादनम् । अधिकवयास्तरुणोवृद्धश्च पूर्व्वत्र शिशुरित्युक्तेस्तदधिकवयस्कएवात्राभिप्रेतः गर्भशय्येव तां गतः गर्भस्थ इत्यर्थः । तत्कर्म्मणि द्रोणपराभवकर्म्मणि साक्षी साक्षात् द्रष्टा प्रतीकारार्थं यत्नाभावेन उदासीनइव स्थित इत्यर्थः । प्रतीपः प्रतिकूलाचारी प्रतिद्वन्द्वी इत्यर्थः । जगतामशेषाणाम् अन्तकस्यापि सकललोकोच्छेदनसमर्थस्यापि तस्य तस्याहमन्तकः नाशकः अन्तं करोतीति णिचि ण्वुलि सिद्धम् । इह उदाहरण नामको मुखसन्धिः "उदाहरणम् उत्कर्षयुक्तं वचनमुच्यते" इति दर्पणोक्तेः ।

(१) जामदग्न्यकृतस्य पितृपराभवहेतुकक्षत्रियवधस्य स्मारणाय जामदग्न्यशिष्येति सम्बोधनम् ।

(२) सः पुराणादौ श्रुतः अयं प्रत्यक्षः कुरुक्षेत्ररूपो देशः यस्मिन् यदेकदेशे समन्तपञ्चकनामकेह्रदाः जलाशया अरातीनां पितृवधकर्तॄणां हैहयानां शोणितानिजलानीव तैः पूरिताः भरैरिति पाठे शोणितौघैरिति व्याख्येयम् । क्षत्रादेव तथाविधः पुराणादौ श्रुतःजामदग्न्यपितृपराभवप्रकारः पराभवः केशग्रहणाद्युग्रहणपूर्व्वकवधः तान्येव जामदग्न्यादधिगतवतस्तातात् प्राप्तत्वात् अहि-

दुर्यो । आचार्य्यपुत्र ! तस्य तथाविधस्यानन्य साधारणस्य ते वीरभावस्य किमन्यत् सदृशम् ।

कृप । राजन् ! सुमहान् खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभारः । तदहमेवं मन्ये भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः किं पुनर्युधिष्ठिरबलम्, अतोऽभिषिच्यतां सैनापत्ये ।

दुर्यो । सुष्ठु युज्यमानमभिहितं युष्माभिः, किन्तु प्राक् प्रतिपन्नोऽयमर्थोऽङ्गराजस्य ।

कृप । राजन् ! असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम्, अस्यापि च तदेवारिकुलमनुशासनीयम्, अतः किमस्य पीड़ा न भविष्यति ।

अश्व । राजन् ! कौरवेश्वर ! किमद्यापि युक्तायुक्तविचारणया

(१) प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा

मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।

---

मानां शत्रूणां तद्विच्छिन्नानां शस्त्राणां घस्मराणि भक्षकाणि निवारकाणीत्यर्थः अतएव गुरूणि । अत्राख्याननामालङ्कारः "आख्यानं पूर्ववृत्तोक्तिरि"ति दर्पणोक्तेः । जामदग्न्यकृतपितृहन्तृहैहयवधकथा च महाभारते आदिपर्वणि २ अध्याये स सर्वं क्षत्रमुत्साद्य स्ववीर्य्येणानलद्युतिः । समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदानिति ॥ समन्तपञ्चके युद्धं कुरुपाण्डवसैनयोरिति च । तथा तत्रैव सम्भवपर्वणि १०८अध्याये जामदग्न्येन रामेण पितृबधममृष्यता राजा परशुना पूर्वं हैहयाधिपतिर्हत इति अनुसन्धेया ।

(१) शेषे स्वप्स्यसि भविष्यत्सामीप्ये लट् । समरचिन्ताराहित्येन स्वाच्छन्द्यात् निद्राधिक्यं प्राप्स्यसीत्यर्थः । अतएव स्तुतिभिः वन्दिनां स्तवनैः

इयं परि समाप्यते रणकथाद्य दोःशालिना
व्यपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥

कर्ण । द्रोणात्मज ! वक्तुं सुकरमिदमध्यवसितुं दुष्करं, बहवः कौरवबले अस्य कर्म्मणः शक्ताः ।

अश्व । अङ्गराज ! एवं बहवः कौरवबले शक्ताः, किन्तु दुःखोपहतः शोकावेगवशाद् ब्रवीमि, न पुनर्वीरजनाधिक्षेपेण ।

कर्ण । मूढ़ ! दुःखितस्याश्रुपातः, कुपितस्य चायुधद्वितीयस्य संग्रामावतरणमुचितं नैवंविधाः प्रलापाः ।

अश्व । सक्रोधम् । अरे रे ! राधागर्भभारभूत ! सूतापसद ! किमेवमाक्षिपसि ।

कर्ण । (१) सूतो वा सूतपुत्रो वा योवा कोवा भवाम्यहम् ।
दैवायत्तं कुले जन्म, मदायत्तं तु पौरुषम् ॥

---

प्रयत्नेन प्रयत्नाधिक्येन गाढनिद्रस्य प्रबोधने प्रयत्नाधिक्यमुचितमेवेति भावः । प्रतिबोधितः निद्राभङ्गं प्रापितः निशामिति अत्यन्तसंयोगे द्वितीया । समस्तां निशां व्याप्येत्यर्थः तेन तृतीयप्रहरे मन्त्रणार्थं निद्राभङ्गो नापेक्षित इति सूचितम् । गाढ़ निद्राप्राप्तौ हेतुमाह रणकथेति चिन्तनपुरःसररण-कर्त्तव्यकार्य्यावधारणार्थं मन्त्ररूपा कथा । दोःशालिना दोर्भ्यां प्रशस्तबलत्वेन शलते श्लाघते इति दोःशाली बाहुबलवतेत्यर्थः परिसमाप्यते समूलं निवार्य्यते । तत्र हेतुः अकेशवमित्यादि केशवस्य तेषां प्रधान सहायत्वात् तस्य मार्गनिर्द्देशः निःसोमकं सोमवंशरहितम् तेन सात्यकिप्रभृतीनां तत्सहाया-नामपि नाशनमुक्तम् भुवो भारहरणार्थमागतस्य केशवस्य वधे तत्र स्यादिति देवानामभीष्टसिद्धि व्याघातइत्याशङ्क्य तदपि स्वयमेव कार्य्यमित्याह नृपे-त्यादि नृपा एव काननानि तैरति गुरुः ।

(१) कुले सत्कुले जन्म दैवायत्तं भाग्याधीनं जात्यायुर्भोगाणां कर्म-

अश्व । किमाह भवान् ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण पश्य ।

(१) निर्वीर्य्यं गुरुशापभाषितवशात् किं मे तवेवायुधं ?
सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा ? ।
जातोऽहं स्तुतिवंशकीर्त्तनविदां किं सारथीनां कुले ?
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण किम् ? ॥

कर्ण । सक्रोधम् । अरे रे वाचाट ! वृथाशस्त्रग्रहणदुर्विदग्ध ! वटो ! ।

---

विपाकतयैव शास्त्रे उक्तत्वात् । पौरुषं विक्रमः मदायत्तं न भाग्यायत्तमित्यर्थः ।

(१) गुरोः परशुरामस्य शापभाषितं शापोक्तिः स्वतोपधात्राप्तमिदं तवास्त्रं न कर्म्मकाले प्रतिभास्यति त्वा' मित्युक्तरूपा तद्वशात् तदायत्तया किं निर्वीर्य्यम् प्रभावरहितम् तच्छापाच्च रणभीरुतापि तस्य। सा च कथा महाभारते कर्णपर्व्वणि ४२ अध्यायेऽनुसन्धेया । निजशिष्यात् क्षत्रियात् पराजयं प्राप्य क्षत्रियाय विद्या न देयेति प्रतिज्ञावतः परशुरामस्य समीपे ब्राह्मणत्वेनात्मानं प्रख्याप्य कर्णेन विद्याधिगता तत् समये च एकस्मिन् दिवसे कर्णोरूपधानं कृत्वा सुप्ते रामे कृकलास रूपिणेन्द्रेण तदूरुभेदनेन रुधिरस्य प्रस्रावणेऽपि गुरोर्निद्राभङ्गभियाऽचञ्चलतया स्थितस्य कर्णस्य प्रबुद्ध गुरुणा तद्दर्शनेन भेदनसह्यत्वगुणेन क्षत्रियत्वं निर्द्धार्य्य "मिथ्याकथनेन विद्यामधिजग्मुषः कर्णस्य. विद्या ते कर्म्मकाले विफला भविष्यतीतिप्रागुक्त शापो दत्त इत्येवं रूपा । क्षुद्रः स्वल्पोऽनायाससाध्यो योऽरातिस्तेन कृतमप्रियमनिष्टं किमस्त्रेण चक्षुर्जलेन प्रतिकरोमि अस्त्रेण किं न, भवत इव मम शापराहित्येनास्त्राणामवीर्य्यत्वाभावात् अभीरुत्वा च्छास्त्रेणैव तत् प्रतिकरोमीति भावः ।

निर्वीर्य्यं वा सवीर्य्यं वा मया नोत्सृष्टमायुधम्।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना॥

अश्व। सक्रोधम्। अरे रथकारकुलकलङ्क! राधागर्भभारभूत! आयुधानभिज्ञ! तातमप्यधिक्षिपसि, अथवा,

(१) स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो क्व नु तदा॥

कर्ण। विहस्य। एवं भीरुरहं त्वं पुनर्विक्रमैकरसः, (२) तव पितरमनुस्मृत्य महान् मे संशयो जातः, अपि च।

अरे मूढ! (३)यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान्।

---

(१) इयं वसुधा तद्वेत्ति बहूनां राज्ञां वधात् क्रमेण भूमे भारोऽपहृत इत्यतो भूमिः भारलाघवेनैव जानातीत्यर्थः अथवा वसुधापदेन तत्स्था लोका लक्ष्यन्ते ते च प्रतिदिनलोकक्षयदर्शनात् तत् कर्म जानन्ति न तु भवान् तदा तव ततः पलायनादिति भावः। शस्त्रत्यागे च यत् कारणं तत् पृथासूनुर्वेत्ति हे रणभीरो! तदा तस्मिन् समये त्वं क्व तत्र नैव स्थितः ततकथं तत्त्यागहेतु परिज्ञानं ते स्यादित्याशयः।

(२) अश्वत्थामोक्तमात्मनो भीरुत्वं प्रौढ्याभ्युपेत्य तस्य विक्रम प्रधानतया व्याजेन संस्तुत्य तस्य दुष्टकर्म दर्शयितुमसमर्थतया तत्पितुर्वक्ष्यमाणकर्म दुष्टतया उद्भाव्य तं निन्दति तव पितर मिति पितरं वक्ष्यमाणकर्म्म कुर्वाणमित्यादि। संशयः निवारणासामर्थ्येन भयेन शोकेन वा उदासितमित्येवं रूपः सन्देहः

(३) वीरैः शस्त्रमुज्झितं त्यक्तं तथापि किमशस्त्रपाणयोऽपि बाहुबलेनापि उदायुधात् उद्धृतास्त्रानरीन् न निवारयन्ति अपि तु निवारयन्त्येव

यदनेन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसन्निधौ ॥

अश्व। सक्रोधं सकम्पञ्च। दुरात्मन्! राजवल्लभ प्रगल्भ! सूतापसद! असम्बद्धप्रलापिन्!

(१)कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥ इति तथा कर्त्तुमुत्तिष्ठति।

कृपदुर्य्योधनौ। गुरुपुत्र! मर्षय, मर्षय इति निवारयतः

अश्व। चरणप्रहारम् नाटयति।

कर्ण। सक्रोधमुत्थाय खड्गमाकृष्य। अरे दुरात्मन्! ब्रह्मबन्धो! आत्मश्लाघिन्!

(२) जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम्।
अनेन लूनं खड्गेन पतितं वेत्स्यसि क्षितौ ॥

---

तदनिवारणेन राजसमूहसन्निधौ स्त्रियेव भीतेन कातरेण असमर्थेन वा यदुदासितं तत् किं हेतुकमिति संशयः तथाच बाहुबलशालित्वेऽवश्यमेव निवारयेस्तस्तु बाहुबलं नासीदिति भावः। एतेनात्मनो गुरुशापेनास्त्रवीर्य्याभावेऽपि बाहुबलशालित्वं सूचितम्।

(१) आत्मनो भुजबलसूचनेन गर्व्वितं कर्णं प्रति तदुक्तवाक्यस्योत्तरं ददत् तदपमानसूचकं वामपादनिक्षेपमभिनयन्नाह भुजबलेन यो दर्पस्तेन ध्मायमानस्य विकत्थमानस्य तव शिरसि अयमुत्तोलितः वामः पुंसः स एवातीवापकृष्टः न तु दक्षिणः पादो निक्षिप्यते कस्तु नैवेत्यर्थः।

(२) जात्या ब्राह्मण्येन कामं तावत् अवध्यो न चेत् खड्गेन वध्यसे इत्यर्थः। अतो येनाङ्गेनापराद्धोऽसि तदङ्गमेव छिद्यते इत्याह उद्धृतमिदं

अश्व। अरे मूढ ! जात्या चेदवध्योऽहम् इयं सा जातिः परित्यक्ता। इति यज्ञोपवीतं छिनत्ति पुनश्च सक्रोधम्।

(१)अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम्।

उभावपि खड्गमाकृष्य अन्योन्यं प्रहर्त्तुमुद्यतौ कृपदुर्य्योधनौ, निवारयतः।

दुर्यो। आचार्य्यपुत्र ! शस्त्रग्रहणेनालम्।

कृप। वत्स ! सूतपुत्र ! शस्त्रग्रहणेनालम्।

अश्व। मातुल ! मातुल ! किं निवारयसि अयमपि तातनिन्दाप्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव। (२)

कर्ण। राजन् ! न खल्वहं निवारयितव्यः।

(३)उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना।

---

परस्य खड्गेन लूनं छिन्नौ पतितमेव वेत्स्यसि नादौ लघुहस्तत्वात् भवतोऽप्रतिकार्य्यत्वाच्च तद्वेदनेऽपि न प्रतिषेधो भविष्यतीत्याशयः।

(१) किरीटी अर्ज्जुनः मिथ्याप्रतिज्ञः विफलीभूता तव बध रूपा प्रतिज्ञा यस्य तथा क्रियते तव बधेन तस्य प्रतिज्ञायाः वैफल्यं सम्पाद्यते इति भावः। शस्त्रं युद्धार्थं गृहाण अथवा शस्त्रं त्यक्त्वा मौलौ अञ्जलिं विनयाञ्जलिं गृहाण नो चेद्वध्य इत्याशयः।

(२) धृष्टद्युम्नपक्षपाती तत् स्थानीयः तातनिन्दकत्वात्।

(३) धीरसत्त्वैः धीरप्रकृतिभिरवज्ञया उपेक्षितानां मन्दानां स्वल्पबलानामपि एषा एवंविधा विकत्थना आत्मश्लाघा भवति ततोऽयं शासनीय इति भावः।

अश्व। राजन्! मुञ्च मुञ्चैनमासादयतु मङ्गुजान्तरनिष्पेषसुलभमसूनामवसादनम् अन्यच्च, राजन्! स्नेहेन कार्य्येण वा त्वमेनं ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि तदुभयमपि (१) वृथैव पश्य।

(२) पापप्रियस्तव कथं गुणिनः सहायः
सूतात्मजः शशधरान्वयसम्भवस्य।
हन्ता किरीटिनमयं नृप मुञ्च कुर्य्यां
क्रोधादकर्णमपृथात्मजमद्य लोकम्॥

इति प्रहर्त्तुमिच्छति।

कर्ण। खड्गमुद्यम्य। अरे वाचाट! ब्राह्मणाधम! एवं न भवसि। राजन्! मुञ्च मुञ्च न खल्वहं वारयितव्यः। इति हन्तुमिच्छति।

दुर्य्योधन कृपौ। निवारयतः।

दुर्य्यो। कर्ण! गुरुपुत्र! कोऽयमद्य युवयोर्व्यामोहः।

कृप। वत्स! अन्यदेव(३)प्रस्तुतमन्यत्रावेग इति कोऽयं व्या-

---

(१) एतद्विषयः स्नेहः एतत्कृतकार्य्यानुरोधित्वञ्चेत्युभयमपि वृथा निष्फलम्।

(२) आदौ असह्यत्वादस्मिन् स्नेहएव तवानुचित इत्युक्त्वा पश्चात् कार्य्यानुरोधित्वमपि निरस्यति अकर्णमपृथात्मजम् एतेन चिकीर्षितपृथात्मजवधस्य मयैव सम्पादनीयतया तदर्थमेतदनुरोधो वृथेति यत् मायुक्तं तत् समर्थितमिति बोध्यम्।

(३) अन्यदेव पाञ्चालादिहननादि प्रस्तुतं चिकीर्षितमन्यत्र स्वबलविरोधएवावेग आसक्तिः। अस्मिन् समये स्वबलयोः परस्परविरोधरूपं यद्व्यसनं तत् सुप्रसत्तः भवतो भवतीति पन्थाः उपायः वामः प्रतिकूलः।

मोहः स्वबलव्यसनं चेदमस्मिन् काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः।

अश्व। मातुल! न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शादयितुम्।

कृप। वत्स! अकालः खलु स्वबलप्रधानविरोधस्य।

अश्व। मातुल! यद्येवम्।

(१)अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत् प्रियमपि मयास्त्रं रणमुखे।
बलानां नाथेऽस्मिन् परिकुपितभीमार्ज्जुनभये
समुत्पन्ने राजा प्रियसखममुं वेत्तु समरे॥

इति खड्गमुत्सृजति।

कर्ण। विहस्य। अपरित्यक्तमपि भवादृशैरायुधं ननु चिरपरित्यक्तमेव निष्फलत्वात्।

(२)धृतायुधो यावदहं तावदन्यैः किमायुधैः।
यद्वा न सिद्धमस्त्रेण मम तत् केन सेतस्यति॥

नेपथ्ये। आः दुरात्मन् द्रौपदीकेशाम्बरकर्षण!
महापातकिन् धार्त्तराष्ट्रापसद! चिरस्य खलु कालस्य मत्सम्मुखमागतोऽसि अरे क्षुद्रपशो! क्केदानीं गम्यते।

अपि च भो भो राधेय दुर्योधनसौबलप्रभृतयः पाण्डवविद्वेषिण-

---

(१) अस्मिन् कर्णे सेनापतौ सति परिकुपितभीमार्ज्जुनभये जाते कर्णं प्रियसखं मां तदा वेत्तु पश्चात्तापेन अनिष्ट शारणाव वा करतु।

(२) यावदहं धृतायुधस्तावदन्यैरन्यधृतैः आयुधैः किं प्रयोजनं मदस्त्रेण न सिद्धं तदन्यास्त्रेण कथं सेतस्यति अपि तु नैवेत्यर्थः।

चापपाणयो मानधनाःशृखन्तु भवन्तः !
(१)स्पृष्टा येन शिरो- रुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः !॥

सर्व्वे आकर्णयन्ति।

अश्व। अङ्गराज ! सेनापते ! जामदग्न्यशिष्य ! (२) द्रोणोपहासिन् ! भुजबलपरिरक्षितसकललोक ! छतायुध इति पठित्वा इदं तदासन्नतरमेव संवृत्तं रक्षैनं साम्प्रतं भीमाद् दुःशासनम्।

कर्ण। आः ! का शक्तिर्वृकोदरस्य मयि जीवति युवराजस्य च्छायामप्या क्रमितुम्। युवराज ! न भेतव्यं न भेतव्यमयमहमागतोऽस्मि इति निष्क्रान्तः।

अश्व। राजन् ! कौरवनाथ ! अभीष्मद्रोणं सम्प्रति कौरवबलमालोड़यन्तौ भीमार्ज्जुनौ राधेयेनैवं विधेनान्येन वा न शक्यते

---

(१) ना पशुरिव अकृत्यस्य परस्त्रीधर्षणस्य कारकत्वात् राज्ञां गुरूणाञ्च भीष्मादीनां पुरोऽग्रे परिधानं वस्त्रमपहृतं गुरुसन्निधाने ब्रीड़ाकरकार्य्यकरणमत्यन्तानुचितमिति भावः। भुजौ पञ्जरमिव बन्धनहेतुत्वात् तत्र निपतितः प्राप्तः हे कौरवाः ! संरक्ष्यतामिति साहङ्कारोक्तिरेषा।

(२) जामदग्न्यशिष्यत्वेन स्पर्द्धमानः द्रोणमधिक्षिपसीति द्योतयन् क्रमेण सम्बोधनद्वयम् सेनापते इत्यनेन असमर्थस्य भवत स्तत्कर्म्मण्यभिषेकादयोग्यपदप्राप्तत्वेन गर्व्वितत्वं द्योतितम् भुज बलेत्यादिविशेषणं छतायुध इत्यादिना यदात्मनो गुणश्लाघा कृता तस्या अयथातथ्यं द्योतकोपहासपरम्।

निवारयितुम् अतः स्वयमेव भ्रातुः प्रतीकारपरो भव।

दुर्य्यो। आः! का शक्तिः दुरात्मनः पवनतनयस्यान्यस्य वा मयि जीवति शस्त्रपाणौ वत्सस्य च्छायामप्याक्रमितुम् वत्स! न भेतव्यं कः कोऽत्र भोः? रथमुपनय। इति निष्क्रान्तः।

नेपथ्ये। कलकलः।

अश्व। अग्रतो विलोक्य। मातुल! हा धिक् कष्टम्! एष खलु भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्य्योधनराधेयौ शरवर्षैर्दुर्व्वारैरभिद्रवति, हा कष्टं! सर्व्वथा पीतं दुःशासनशोणितं भीमेन, न खलु विषेहे दुर्य्योधनानुजस्यैनां विपत्तिमवलोकयितुम्, अनृतमनुमतं नाम मातुल! शस्त्रं शस्त्रम्।

(१) सत्यादप्यनृतं श्रेयो धिक्! स्वर्गं नरकोऽस्तु मे।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम्॥

इति खड्गं ग्रहीतुमिच्छति।

नेपथ्ये। महात्मन् भारद्वाजसूनो! न खलु सत्यवचनमनुल्लङ्घितपूर्व्वमुल्लङ्घयितुमर्हसि।

कृप। वत्स! अशरीरिणी वाणी भवन्तमनृतादभिरक्षति।

अश्व। कथमियममानुषी वाग् नानुमनुते संग्रामावतरणं मे, भोः! कष्टम्। आः! पक्षपातिनो देवा अपि पाण्डवानम्। सर्वथा पीतं दुःशासनशोणितं भीमेन, भोः कष्टम्!

---

(१) शस्त्रपरित्यागः प्रतिज्ञातस्तस्य ग्रहणेऽसत्यमाशङ्क्य असत्यकार्यं नरकमपेक्ष्य दुःशासनवधजन्यदुःखमधिकं मन्यमान आह सत्यादप्यनृतमिति त्यक्तं हतया प्रतिज्ञया मुक्तमायुधं दुःशासनं भीमाद्रक्षितुमत्यक्तं पुनर्गृहीतमस्तु इत्यर्थः।

दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम् ।
दुर्य्योधनस्य कर्त्तासि किमन्यत् प्रियमाहवे ॥

मातुल ! राधेयक्रोधवशादनार्य्यमस्माभिराचरितम् अतस्त्वमपि तावदस्य राज्ञः पार्श्वपरिवर्त्ती भव ।

कृप । गच्छाम्यहमद्य प्रतिविधातुं, भवानपि शिविरसन्निवेशमेव प्रतिष्ठताम् ।

उभौ परिक्रम्य निष्क्रान्तौ ।

इति तृतीयोऽङ्कः ।

---

इति श्रीतारानाथ तर्कवाचस्पति भट्टाचार्य्य
विरचिते वेणीसंहारनाटक व्याख्याने
अश्वत्थामनामकतृतीयाङ्कव्याख्या ।

# चतुर्थोऽङ्कः ।

ततः प्रविशति प्रहारमूर्च्छितं रथस्थं दुर्य्योधनमपहरन् सूतः ।

सूत । ससंभ्रमम् परिक्रामति ।

नेपथ्ये । भो भो बाहुबलावलेपप्रवर्त्तितमहासमरदोहदाः कौरवपक्षपातपणीकृतप्राण (१) द्रविणसञ्चया नरपतयः ! संस्तभ्यन्तां, हतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनविषादपरिस्खलत्प्रहरणानि रणात् प्रद्रवन्ति बलानि ।

सूत । विलोक्य । कथमेष धवलचपलचामरचुम्बितकनककमण्डलुना शिखरावनद्धवैजयन्तीसूचितेन हतगजवाजिनरकलेवरसहस्रसंमर्द्दविषमोत्खातक्षतकलकलकिङ्किणीजालमालिना रथेन शरवर्षस्तम्भितपरबलपराक्रमप्रद्रुतमात्मबलमाश्वासयन् कृपः किरीटिनाभियुक्तमङ्गराजमनुसरति । हन्त ! जातमस्मद्बलानामवलम्बनम् ।

नेपथ्ये । कलकलानन्तरम् ।

भीम । भो भो अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः पाण्डवपक्षपातिनश्च योधाः! न भेतव्यम् न भेतव्यम्, अयमहं निहतदुःशासनपीवरोरःस्थलक्षत-

---

(१) कौरवपक्षपातेन तत्स्नेहेन तत्साहाय्येन तदर्थमिति यावत् पणीकृतः प्राण एव द्रविणसञ्चयो यैः यथा द्यूतादौ द्रविणसञ्चयः पणीक्रियते एवं रणद्यूते तैः प्राण एव पणीकृत इत्यर्थः ।

जासवपानमदोद्धतो रभसगामी स्तोकावशिष्टप्रतिज्ञामहोत्सवः (१) कौरवराजस्य द्यूतनिर्जितो (२) दासः पार्थमध्यमो भीमसेनः सर्व्वान् भवतः साक्षीकरोमि श्रूयताम्।

(३) राज्ञोमानधनस्य कार्मुकभृतो दुर्य्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य च तथा कर्णस्य शल्यस्य च।
पीतं तस्य मयाद्य पाण्डवबधूकेशाम्बराकर्षिणः
कोष्णं जीवतएव तीक्ष्णकरजक्षुण्णादसृग् वक्षसः॥

सूत। श्रुत्वा सभयम्। अये! आसन्न एष दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतः, अनुपलब्धसंज्ञश्च तावदत्र महाराजः, भवतु सुदूरमपनयामि स्यन्दनम्, कदाचित् दुःशासन इवास्मिन्नप्यनार्य्योऽनार्यमाचरिष्यति। त्वरितं परिक्रम्यावलोक्य च।

---

(१) स्तोकं स्वल्पमवशिष्टा दुर्य्योधनोरुभङ्गरूपा या प्रतिज्ञा तया महोत्सवो यस्य प्रतिज्ञायाः स्वल्पावशिष्टत्वात् जातानन्दसन्दोह इत्यर्थः।

(२) द्यूतेन निर्ज्जितः अतएव दासः दासत्वेन पूर्व्वमुपहसित इत्युक्त्या च अपकारकारणम् अयमित्यनेन दुःशासनोरः स्थलक्षतजासवपानेनात्मनो मत्तता ख्यापिता।

(३) राज्ञः इति मानधनस्येति कार्म्मुकभृत इति च विशेषणत्रयेण राज्ञोऽपमानोऽतीव दुःसहः विशेषतः मानधनस्य तत्रापि चापधारित्वेऽपि प्रतीकाराक्षमत्वमित्येतदपि अपमानायैवेति सूचितम्। यस्य बलाश्रयणेन यस्य च मन्त्रणेनास्मद्विरोधिता कृता तयोः कर्णशौबलयोरपि समक्षं तत्रापि कुरुबान्धवस्य कार्म्मुक भृत इति च विशेषणं योज्यम्। तत्र कर्णपक्षे कुरूणां मित्रस्येत्यर्थः। शकुनिपक्षे बन्धुशब्दस्य पितृमातृवाचकतया तत् सम्बन्धित्वात् बान्धवस्य मातुलस्येत्यर्थः। तीक्ष्णैः करजैरङ्गुल्यग्रैर्नान्यसाधनापेक्षेतिभावः क्षुण्णात् जीवत एव तस्य वक्षसः कोष्णं असृक् रुधिरं पीतम्।

अये ! अयमसौ सरसीसरोजविलोलनशीतलसुरभि(१)मातरिश्वसंवाहितसान्द्रकिसलयो न्यग्रोधपादपः, उचिता विश्रामभूरियं समरव्यापारखिन्नस्य वीरजनस्य। अत्रस्थश्चायमयत्नोपवीजिततालवृन्तेन (२) हरिचन्दनच्छटाशीतलेनाप्रयत्नसुरभिणा दशापरिणाम-(३)-योग्येन सरसीसमीरणेन च विगतक्लमो भविष्यति महाराजः। लूनकेतुश्चायं रथोऽनिवारित एव प्रवेक्ष्यति च्छायामिति। पूर्ववत् रूपयित्वा। कः कोऽत्र भोः? समन्तादवलोक्य। कथं न कश्चित्, परिजनः। नूनं तथाविधस्य वृकोदरस्य दर्शनादेवंविधस्य च स्वामिनस्त्रासेन (४) शिबिरसन्निवेशमेव प्रविष्टः, (५) भोः! कष्टम् कष्टम्।

(६)दत्त्वा द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन् हरिण इव कृतं भीमसेनेन कर्म।

---

(१) सरस्याविलोलनेन च सुरभिः इति यथाक्रममन्वयो बोध्यः। तादृशप्रभात मारुतेन वाहितः चालितः सान्द्रः निरन्तरः किसलयो यस्य।

(२) अयत्नेन प्रयत्नं विनापि अनायासेनेत्यर्थः। अयत्नम् अयत्नसाध्यं वा यदुपवीजितं व्यजनचालनादि तदेव तालवृन्तमिव व्यजनकार्यमिव यस्य।

(३) दशाया अवस्थाया मूर्च्छावस्थाया इति यावत् परिणाम अवसानाभावस्तच्छान्तिरिति यावत् तत्र योग्येन समर्थेन।

(४) एवं विधस्य मूर्च्छां गतस्य स्वामिनस्त्रासेन जीविष्यति नवेति संशयेन अतएव भीत्यर्थत्वाभावान्न पञ्चमी।

(५) प्रविष्ट इति कर्त्तरि क्तः परिजनविशेषणम्।

(६) अभयं दत्त्वा पार्थाद्‌ भयं नास्तीति अभयं प्रदर्श्य पार्थात् सिन्धुराजो जयद्रथो न रक्षितः एतच्च कुरुबलहानिः। भीमेन हरिणइव

दुःसाध्यामप्यरीणां लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं कुरुकुलविमुखं दैवमेतावतापि ॥

राजानमवलोक्य। कथमद्यापि न चेतनामुपलभते महाराजः, भोः! कष्टम्। निश्वस्य।

(१)मदकलितकरेणुभज्यमाने विपिन इव प्रकटैकशालशेषे।
हतसकलकुमारके कुलेऽस्मिं स्त्वमसि विधेरवलोकितः कटाक्षैः ॥

ननु भो हतविधे! भरतकुलविमुख।
(२) अक्षतस्य गदापाणेरनारूढ़स्य संशयम्।
एषापि भीमसेनस्य प्रतिज्ञा पूर्य्यते त्वया ॥

---

अनायासवध्यत्वात् मृगतुल्ये अस्मिन् दुःशासने क्रूरं कर्म्म वक्षःस्थलवि-दारणपूर्वकरुधिरपानं कर्म्म अरीणां अप्ये इति शेषः दुःसाध्यामपि प्रतिज्ञां लघुमिव पूरयित्वा तादृशं कर्म्म कृतमित्यन्वयः कुरुकुलविमुख तत्प्रतिकूलं दैवं नियतिः एतावताऽपि दुःशासनवधपर्य्यन्तकरणेनापि सकामम् सम्पूर्ण मनोमथं न इत्यहं मन्ये इत्युत्प्रेक्षे नो चेत् राज्ञः कथमीदृशी दशेति भावः।

(१) मदेन कलितः मत्तः करेणुः करिशावकः भीमसेनरूपः तेन भज्यमाने प्रकटः स्पष्ट एक एव शालो वृक्षः शेषो यत्र तादृशे हतसकलकुमाररूपवृक्षसमूहे विपिनइव अस्मिन् कुले अर्थात् वर्त्तमानस्त्वं विधेः कुरुकुलविमुखभाग्यस्य कटाक्षैरवलोकितः मया विमुखत्वेऽवलम्बितेऽपि कमयमेकोऽपीदानीम् शिष्यते इति बुद्ध्या दृष्ट इत्यर्थः। त्वमिति दर्शनात् महाराजसम्बोधनकमेवैतद्वाक्यमिति बोध्यम्।

(२) भीमेन ऊरुभङ्गार्थे युद्धकरणे उभयोश्च युद्धे भीमस्य शरीरतमादिकं जीवनं भवेत न वेति संशयम् संशयगोचरतामनारूढ़स्याप्राप्तस्य, दुर्य्योधनस्य गदायुद्धे नैपुण्यात् भीमस्य जीवने। अवश्यमेव संशयो भवेदिति सूचितम्। एषा ऊरुभङ्गफलीभूता वधरूपा प्रतिज्ञा पूर्य्यते पूर्त्तिं प्राप्यते इति।

दुर्यो । सनैरुपलक्ष्य सत्रासं आः का शक्तिरस्ति पवनतनयस्य वृकोदरस्य मयि जीवति दुर्य्योधने प्रतिज्ञां पूरयितुं,(१) वत्स ! दुःशासन ! न भेतव्यं न भेतव्यम्, अयमहमागतोऽस्मि, सूत ! प्रापय रथं तमुद्देशं यत्र वत्सो दुःशासनस्तिष्ठति ।

सूत । आयुष्मन् ! अक्षमाः सम्प्रति वाहास्ते रथमुद्बोढुम् । अपवार्य्य । [ वयञ्च ] ।

दुर्यो । रथादवतीर्य्य सगर्वं साकूतञ्च । किं स्यन्दनगमनकालातिपातेन ।

सूत । सवैलक्ष्यं सकरुणञ्च । मर्षयतु आयुष्मान् ।

दुर्यो । धिक् सूत ! किं रथेन, केवलमरातिविमर्द्दसंघट्टसञ्चारी दुर्य्योधनः खल्वहं, तद्गदामात्रसहायः समरभुवमवतरामि ।

सूत । आयुष्मन् ! एवमेतत् कः सन्देहः ।

दुर्यो । यद्येव किमेवं भाषसे । पश्य,

(२) बालस्य मे प्रकृतिदुर्ललितस्य पापः,

पापं व्यवस्यति समक्षमुदायुधोऽसौ ।

---

(१) सूतपठितश्लोकशेषस्य प्रतिज्ञा पूर्य्यते इति भागस्योच्चारणसमये सत्रस्ततया तच्छ्रवणे दुःशासनोरःस्थलात्तव पानप्रतिज्ञापूरणपरतां मत्वा तत्प्रतीकारार्थमुद्यतस्य राज्ञः का शक्तिः प्रतिज्ञापूरयितुमित्युक्तिरिति बोध्यम् ।

(२) बालस्य अतएव प्रकृत्या स्वभावेन चञ्चलस्य इत्यनेन द्रौपदीके

अस्मिन्निवारयसि किं व्यवसायिनं मां
क्रोधो न, नापि करुणा, न च तेऽस्ति लज्जा॥

सूत। सकरुणं पादयोर्निपत्य। एतद्विज्ञापयामि आयुष्मन्! सम्पूर्णप्रतिज्ञेन निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन अत एवं ब्रवीमि।

दुर्यो। सहसा भूमौ पतन्। हा! वत्स! दुःशासन!, हा मदाज्ञाविरोधितपाण्डव!, हा विक्रमैकरस! हा मदकदुर्ललित! (१) हा अरातिकुलगजघटामृगेन्द्र! हा युवराज! क्वासि प्रयच्छ मे प्रतिवचसम्। इति निश्वस्य मोहमुपगतः।

सूत। राजन्! समाश्वसिहि समाश्वसिहि।

दुर्यो। संज्ञां लब्ध्वा निश्वस्य।

(२)युक्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितोऽपि हि मया न वृथाग्रजेन।
अस्यास्तु वत्स! तव हेतुरहं विपत्ते-
र्यत् कारितोऽस्यविनयं न च रक्षितोऽसि॥ इति पतति।

---

शाम्बराकर्षणादिकं बालभावादेव कृतमिति सूचितम् मे समक्षम् पापः उदायुधः सन् पापं वक्षःस्थलविदारणरूपं व्यवस्यति करोति अस्मिन् विषये एतत् प्रतीकाराय व्यवसायिनं कृतोद्यमं मां निवारयसि अत ते तव क्रोधो न, भ्रातृवधेऽपि क्रोधाभावः, करुणा न, परदुःखप्रहरणेच्छाभावः। लज्जा न. शत्रूणां समक्षं प्रतिज्ञा पूर्य्यते तत् सहनादपमानाबोधाच्च न लज्जेत्याशयः।

(१) मदके दुर्ललितं चाञ्चल्यरूपं चेष्टा यस्य।

(२) उपभोगसुखेषु भोजनाच्छादनादिसम्भोगजनकव्यापारेषु न लालितः न पालितः अतएव मयि वृथाग्रजत्वम्। अस्या भीमसेनकृतवक्षोवि-

सूत। आयुष्मन्! समाश्वसिहि।

दुर्य्यो। धिक् सूत! किमनुष्ठितं भवता।

(१) रक्षणीयेन सततं बालेनाज्ञानुवर्त्तिना।

दुःशासनेन भ्रात्राहमुपहारेण रक्षितः॥

सूत। महाराज! मर्म्मभेदिभिरिषुतोमरशक्तिप्रासवर्षैर्महारथानामपहृतचेतनत्वान्निश्चेतनः कृतो महाराज इत्यपकृतो मया रथः।

दुर्य्यो। सूत! विरूपं कृतवानसि,

(२) तस्यैव पाण्डवपशोरनुजद्विषो मे

(३) चोदैर्गदाशनिकृतैर्न विबोधितोऽस्मि।

यद्येव नाधिशयितो रुधिरार्द्रशय्यां

दौःशासनीं यदहमद्य वृकोदरो वा॥

---

दारुणरूपाया विपत्तेः अहमेव हेतुः द्रौपद्याः केशाम्बरकर्षणादेर्मदाज्ञयैव कृतत्वात्। अविनयं द्रौपदीकेशग्रहादिरूपं कारितः त्वत्कृतापकारप्रतीकर्त्तुर्भीमात् न च रक्षितः।

(१) देवादिभ्यः अनिष्टनिवारणार्थं दीयमानो बल्यादिरुपहारस्तथाच भीमाय एतादृशं भ्रातरमुपहारत्वेन दत्त्वाऽहं रक्षित इत्यनुचितं कृतमित्यर्थः।

(२) ममानुजद्विषस्तस्य गदारूपवज्रकृतैः चोदैर्निष्पेषैस्तत् कृतध्वनिभिरेवेत्यर्थः।

(३) चोर्भैरिति पाठे तत्कृतनोदनैः। यदि यस्मात् रणभूमितोऽपवाहनात् हेतोः न विबोधितोऽस्मि अनपवाहे तु उक्तहेतुभिरवश्यं बोधितः स्यामित्यर्थः। यद्येव पाठस्तु समीचीनः हि यस्मात् यद्य विबो-

निःश्वस्य नभो विलोक्य। ननु भो! हतविधे! कृपाविरहित! भरतकुलविमुख!

(१) अपि नाम भवेन्मृत्यु? न च हन्ता वृकोदरः।

सूत। शान्तं पापं, महाराज! किमिदम्।

दुर्यो। घातिताशेषबन्धोर्मे किं राज्येन जयेन वा॥

ततः प्रविशति सप्रहारः पुरुषः।

पुरुषः। अज्जा! अवि णाम इमस्सिं उद्देसे सारहिदुइओ दिट्ठो तुह्मेहिं महाराअदुज्जोहणो ण वेत्ति। कहं ण कोवि मन्तेदि, होदु,बहुपरिअराणं पुरिसाणं समूहो दीसइ एत्थ गदुअ पुच्छिस्सं विलोक्य कहं एदे क्खु स्ससामिणो गाढ़प्पहारस्स घणसणाह-जालदुब्भेज्जमुहेहिं कङ्कवत्तेहिं हिअआदो सल्लाइं उद्धरन्ति ता क्खु एदे ण जाणन्ति, होदु, असदो विचिणस्सं इमे क्खु

---

धितोऽस्मीत्यर्थः। यच्च प्रागुक्तहेतोरेव दौःशासनीं तदुष्णोतां रुधिराईशय्यामहं वृकोदरो वा अद्यैव नाधिशयितः अनपवाहने तु अन्यैर्हेतुभिः बोधितः सन् भीमेन सह युध्यमानस्तेन हतः अहमथवा मया हतो वृकोदरो वा तामधिशयितः स्यादित्यर्थः। एवञ्च एतद्दृयं यच्च सम्भूतं तत्रापवाहनमेव हेतुरतोविरूपताकरणं यदुक्तं तत् समर्थितम्।

(१) यथेष्टं मूर्च्छाशोकरोगादिना मृत्युर्भवेदपि न तु वृकोदरहस्तात् मरणं भवेदित्याशयः।

आर्य्याः! अपि नाम अस्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्माभिः महाराजदुर्योधनो न वेति?। कथं न कोऽपि मन्त्रयते? भवतु बहुपरिकराणां पुरुषाणां समूहो दृश्यते अत्र गत्वा प्रच्छामि कथमेते खलु स्वस्वामिनो गाढ़प्रहारस्य घनसन्नाहजालदुर्भेद्यमुखैः (निविड़सन्नाहजालमिव दुर्भेद्यमग्रं येषां तैः) कङ्कपत्रैः (शल्योद्धारयन्त्रभेदैः) हृदयात्

अवरे प्पहूददरा संकलिदा बीरमाणुसा ता, एत्थ गदुत्र पुच्छिस्सम्। उपगम्य। हंहो! जाणह कस्सिं उद्देसे कुरुणाहो वट्टइ त्ति?। कत्रं एदेवि मं पेक्खित्र अहित्रदरं रोत्रन्ति। दृष्ट्वा। ता णहु एदेवि जाणन्ति। हा! दुक्करं क्खु एत्थ वट्टइ, एसा बीलमादा समलविणिहदं पुत्तत्रं सुणित्र रत्तंसुत्रणिवसणाए समग्गभूसणाए बहूए सह त्रनुमरेदि।

सश्लाघम्। साहु बीरमादे! साहु अस्सिंवि जम्मान्तरे त्रणिहदपुत्तत्रा हुविस्सदि होदु त्रसदो [विचिणिस्सं।] अन्यतो विलोक्य। त्रत्रं त्रवरो बहुप्पहारणिहदकात्रो त्रकिदव्वणप्पड़िआरो एव्व जोहसमूहो इमं सुस्सासणं तुलङ्गमं उवालहित्र रोइदि णूणं एदाणं एत्थ एव्व सामो वावादिदो

---

शस्त्राणि उद्धरन्ति, तत् खल्वेते न जानन्ति। भवतु अन्यतो विचेष्यामि, इमे खलु अपरे प्रभूततराः सङ्कलिताः बीरमानुषाः, तदत्र गत्वा प्रच्छामि। हंहो! जानीथ कस्मिन् उद्देशे कुरुनाथो वर्त्तते? इति। कथमेतेऽपि मां दृष्ट्वा अधिकतरं रुदन्ति, तन्न त्वेतेऽपि जानन्ति। हा! दुष्करं खलु अत्र वर्त्तते। एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्रभूषणया बध्वा सह अनुम्रियते। साधु वीरमातः, साधु अस्मिन्नपि जन्मान्तरे अनिहतपुत्रका भविष्यसि। भवतु अन्यतो विचेष्यामि अयमपरो बहुप्रहारनिहतकायोऽकृतव्रणप्रतीकार एव योधसमूह इमं शून्यासनं तुरङ्गममुपालभ्य रोदिति नूनमेवामत्रैव स्वामी व्यापादितः तन्न त्वेतेऽपि जानन्ति, भवतु अन्यतो गत्वा प्रच्छामि। कथं सर्वएव अवस्थानुरूपं व्यसनमनुभवन् भागधेयविप्लुततया पर्य्याकुलो जनः तत् कमत्र प्रच्छामि कं वा

---

[पुच्छिस्सं]

ता एदु एदे बि जाणन्ति होदु असदो गदुअ पुच्छिस्सं। सर्व्वतोविलोक्य। कहं सब्बो एब्ब अबत्थाणुरूबं ब्बसणं अणुभवन्तो भाअधेअबिमुहदाए पज्जाउलो जणो ता कं एत्थ पुच्छिस्सं कं बा उबालहिस्सं होदु सअं एब्ब एत्थ बिचणिस्सं! परिक्रम्य। देब्बं दाणीं उबा लहिस्सं हंहो देब्ब! ए आदसाणं अक्खोहिणीणं (१) णाहो जेट्ठो भादुसदस्स भत्ता गाङ्गेयजयद्दथद्दोणङ्गराअसल्लकिबकिदबम्म अस्सत्थामप्पमुहस्स राअचक्कस्स सअलप्पहिबीमण्डलेक्कणाहो महराअ दुज्जोहणोबि

(१) अक्षौहिण्यां प्रसंख्याता रथानां द्विजसत्तमाः।
संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः।
शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः॥ (२१८७० रथाः)
गजानाञ्च परीमाणं तावदेव विनिर्द्दिशेत्। (२१८७० गजाः)
ज्ञेयं शतसहस्राणि सहस्राणि नवैव तु। (१०९३५० नराः)
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः॥
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च।
दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया॥ (६५६१० वाजिनः)
आदिपर्व्वणि २ अध्यायोक्ताक्षौहिणीसंख्या ग्राह्या।

उपालप्स्ये। भवतु स्वयमेवात्र विचेष्यामि। भवतु दैवमिदानीमुपालप्स्ये, अहो दैव! एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्त्ता गाङ्गेयजयद्रथद्रोणाङ्ग राजशल्यकृपकृतवर्म्माश्वत्थामप्रमुखस्य राजचक्रस्य सकलपृथिवीमण्डलैकनाथो महाराजदुर्य्योधनोऽपि अन्विष्यते न जाने कस्मिन्नुद्देशे स वर्त्तत इति। अथवा किमत्र दैवमुपालभे तस्य खल्विदं निर्भर्त्सितविदुरवचनबीजस्य परिभूतपितामहहितोपदेशाङ्कुरस्य शकुनिकृतकप्रोत्साहनादिविरूढ़मूलस्य जतुम्टहद्युतविषशाखिनः संभृतचिरकालस-

अण्णेसीअदि (१) ण जाणे कस्सिं उद्देसे सो वट्टइ त्ति। विचिन्त्य निश्वस्य च। अह वा किं एत्थ देव्वं उवालहामि जदो तस्स क्खु एदं (२) णिब्भच्छिदविउलवअणवोअस्स (३) परिहुदपिदामहहिदोवदेसङ्कुरस्स (४) सउणिहदअप्पोत्साह णादिविरूढमूलस्स (५) जदुगेहदूदविससाहिणो (६) संभूदचिरआलसंबद्धवेरालवालस्स पञ्चालिआकेसग्गहणकुसुमस्स फलं (७) परिणमदि (८)। अन्यतो विलोक्य। जहा एत्थ एसो विविहरअणप्पहासम्वलिदसूरकिरणप्पसूदस-

(१) अन्विष्यते स्वजनेन बहूनां मैन्यानां विनाशात् परिजनाद्दतत्वाभावेन कश्चित् स्वीयतेऽत्यनुसन्धानं कर्त्तव्यं तच्च दुर्भाग्यकृतमित्याशयः।

(२) निर्भर्त्सितमवज्ञातं यत् विदुरवचनं तदेव वीजं यस्य।

(३) परिभूतः पितामहहितोपदेशः भीष्महितकथनमङ्कुरो यस्य।

(४) शकुनिरेव हतकः सर्वानिष्टकरत्वात् तस्य यत् प्रोत्साहनादि उत्तेजनादि तेन विरूढं जातं मूलं यस्य।

(५) जतुग्टहं द्यूतं विषञ्च तान्येव शाखो वृक्षस्तत्र यस्य।

(६) संभृतः सञ्चितः चिरकालसम्बन्धो यस्य चिरसञ्चितमित्यर्थः तादृशं यद् वैरं विद्वेषः तदेवालवालो यस्य सिक्तजलधारणार्थं वृक्षमूले मृत्तिकादिरचितचतुःसेतुविशेष आलवालः।

(७) पञ्चालिकायाः केशग्रहणमेव कुसुमं यस्य।

(८) तादृशवृक्षस्य फलमिव फलं कार्य्यं परिणमति भरतकुलक्षयरूपतया जायते इत्यर्थः।

स्वद्धवैरालवालस्य पाञ्चालिकाकेशग्रहणकुसुमस्य फलं परिणमति। यथा अत्रैष विविधरत्नप्रभासम्वलितसूर्य्यकिरणप्रसूतशक्रचापसहस्रपूरितदशदि-

चावसहस्ससंपूरिददसदिसामुहो (१) लुणकेदुवंसो रहो दीसइ ता अहं तक्केमि अवस्सं एदिना महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वं । (क)

उपसृत्य हृष्टा च । जअदु जअदु महाराओ । (ख)

सूत । विलोक्य । आयुष्मन् ! समरात् सुन्दरकः प्राप्तः ।

दुर्यो । विलोक्य । अये सुन्दरक ! कच्चित् कुशलमङ्गराजस्य ?

सुन्द । देव ! कुशलं शरीरमेत्तेण । (ग)

दुर्यो ससंभ्रमम् । सुन्दरक ! किं किरीटिनाऽस्य निहता धौरेयकाः, हतः सारथिः भग्नो वा रथः ।

सुन्द । देव ! ण रहो भग्गो से मणरहोवि ॥ (घ)

दुर्यो । सरोषम् । अरे ! किमिदमस्पष्टकथितैराकुलमपि मे मनः पर्य्याकुलयसि तदशेषतो विस्पष्टं कथ्यताम् ।

सुन्द । (ङ)जं देवो आणवेदि । अए देवस्स मउडमणिप्पहावेण अवणीदा मे रणप्पहारवेअणा । इति साटोपं परि-

---

(१) विविधरत्नप्रभाया सम्वलितेन मिलितेन सूर्य्यकिरणेन प्रसूतं जनितं यदिन्द्रचापसहस्रं तेन पूरितं दशदिशामुखं येन ।

---

सहस्रोलूनकेतुवंशो रथो दृश्यते तदहं तर्कयामि अवश्यमेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यम् । (क)

(ख) जयतु जयतु महाराजः ।

(ग) देव ! कुशलं शरीरमात्रेण ।

(घ) देव ! न रथो भग्नः, अस्य मनोरथोऽपि ।

(ङ) यद्देव आज्ञापयति । अये ! देवस्य मुकुटमणिप्रभावेणापनीता मे

कञ्च। सुणादु देवो अज्ज दाव कुमालदुस्सासणवह दुय्यो-न्नो सुखमाहणोति।

सूत। सुन्दरक! कथय कथितमेव देवेन।

दुर्य्यो। कथ्यतां श्रुतमस्माभिः।

सुन्द। सुणादु देवो अज्ज दाव कुमालदुस्सासणवहामरिसिदेण सामिणा अङ्गराएण कुड़िल भउड़ीभङ्गभीसणललाड़-बट्टेण अविस्सादसन्धाणमोक्खेण सिलीमुहसंघादवरिसिणा अभिजुत्तो सो दुराआरो मज्झमपण्डवो भीमसेणहदओ। (क)

उभौ। ततस्ततः।

सुन्द। तदो देव! उभअबलमिलन्तदोप्पन्तकरितुरअपदादिसमुब्भूदधूलिणिवहेण पल्लत्थतत्तद्गअघड़ासंघादेण अ वित्थरन्तेण अन्धरायेण अन्धकिदं उभअबलं ण भुवणतलं लक्खीअदि। (ख)

उभौ। ततस्ततः।

सुन्द। तदो देव! दूराकड्ढिदधणुग्गुणच्छोटणटङ्कारगभी-

---

रणप्रहारवेदना। शृणोतु देवः, अद्य तावत् कुमारदुःशासनवधः।

(क) शृणोतु देवः अद्य तावत् कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कुटिलभ्रूकुटीभङ्गभीषणललाटपट्टेन अविज्ञातसन्धानमोक्षेण शिलीमुखसङ्घातवर्षिणा अभियुक्तः स दुराचारो मध्यमपाण्डवो भीमसेनहतकः।

(ख) ततो देव! उभयबलमिलद्दीप्यत्करितुरगपदातिसमुद्भूतधूलिनिवहेन पर्य्यस्ततत्तद्गजघटासङ्घातेन च विस्तीर्य्यमाणेनान्धकारेण अन्धीकृतमुभयबलं न भुवनतलं लक्ष्यते।

भीसणेण (१) अन्धआरेण जाणीअदि गज्जिदं पलअजलह-रेण त्ति । (क)

इर्यौ । ततस्ततः ।

चन्द ।(ख) तदो देव ! दोह्णिं ताणं अण्णोण्णसिंहणादग-ज्जिदपिसुणं (२)बिबिहपरिमुक्कप्पहरणाहदकबअसंगलिदज्ज-लणविज्जुअं (३) बहललुहिलबिन्दुखज्जोअभासुरं गम्भीरत्थ-णिदचापजलहरप्पसरिदसर धारासहस्स बरिसदुद्दंसणं (४) संभूदं समरदुद्दिणं ।

इर्यौ । ततस्ततः ।

---

(१) अन्धकारस्य मेघतुल्यश्यामलतया धनुष्टङ्कारस्य गर्ज्जितसाम्येन च भातत्वात् प्रलयमेघेन गर्ज्जितमिति ज्ञायते इत्युत्प्रेक्ष्यते इत्यर्थः ।

(२) अन्योन्यशुद्धिस्य सिंहनादः सिंहस्येव शब्दः स एव गर्ज्जितस्य मेघनादस्य पिशुनः सूचकः यत्र ।

(३) विविधैः परिमुक्तैः प्रहरणैः शस्त्रैराहतात् व्याघट्टितात् कवचात् लौहमयसन्नाहात् संगलिता स्फुरिता ज्वलनएव विद्युद्यत्र विद्युच्चक्रमिति पाठे विद्युत्समूहोयत्रेति वाक्यम् ।

(४) गम्भीरं स्तनितं गर्ज्जितं यस्य तादृशश्चापएव जलधरो मेघस्तस्मात् प्रसरत् यत् शराणाम् धारासहस्रं धारारूपतां प्राप्तं शरसहस्रमित्यर्थः तद् यत्र एवम्भूतेन वर्षेण शरनिक्षेपरूपवृष्ट्या दुर्दर्शनम् ।

---

(क) ततो देव ! दूराकृष्टधनुर्गुणस्फोटनटङ्कारगम्भीरभीषणेनान्धकारेण ज्ञायते गर्जितं प्रलयजलधरेणेति ।

(ख) ततो देव ! द्वयोस्तयोरन्योन्य सिंहनादगर्जितपिशुनं विविधपरिमुक्तप्रहरणाहतकवचसङ्गलितज्वलनविद्युत्कं बहलरुधिरबिन्दुखद्योतभासुरं गम्भीरस्तनितचापजलधरप्रसरच्छरधारासहस्रवर्षदुर्दर्शनं सम्भूतं समरदुर्दिनम् ।

सूत। (क) तदो अ देव! एदस्सिं अन्तरे जेट्ठस्स भादुणो पराभवसङ्किणा धणञ्जएण वज्जणिग्घादणिग्घोसविसमरहरसिद हओ (१) सिहरट्ठिदवाणरो (२) तुरङ्गमसंवाहणवापिदवासुदेवसङ्खचक्कगदासि लञ्छिदचडुलचउव्वाहुदुद्दंसणो (३) आपूरिअपञ्चजण्णदेअदत्त (४) तारसिदप्पडिरवभरिददसदिसामुहकुहरो (३) धाविदो तं

---

(१) वज्रनिर्घातः वज्रशब्दइव यो निर्घोषः रथचक्रकठोरशब्दस्तेन विषमराश्वञ्चला हेषिता हया यत्र हेषणा वाजिशब्दः।

(२) शिखरस्थितवानरः कपिध्वजः

(३) वाहानामश्वानां वाहने चालने व्यापृतस्य वासुदेवस्य शङ्खादिलाञ्छितैः चतुर्भिर्बाहुभिः दुर्दर्शनः यद्यपि वासुदेवस्य चतुर्भुजतया समुद्भवेऽपि जन्मोत्तरमेव द्विभुजता जातेति भागवते तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधमिति, पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुरिति च १० स्क० ३ अध्याये उक्ता तथापि भारतयुद्धकाले विपक्षसैन्यानां त्रासनार्थं पुनश्चतुर्भुजता प्रकटिता "तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते" इति गी० ११अ० विश्वरूपदर्शनात् भीतस्यार्जुनस्य भगवन्तं प्रति तेनैवेत्युक्त्या चतुर्भुजाश्रितेति सूचितम्।

(४) पाञ्चजन्यः केशवशङ्खः देवदत्तः अर्जुनशङ्खः पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जय इति गीतायामुक्तत्वात्।

---

(क) ततश्च देव! एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः पराभवशङ्किना धनञ्जयेन वज्रनिर्घातनिर्घोषविषमरहेषितहयः शिखरस्थितवानरस्तुरङ्गमसंवाहनव्यापृतवासुदेवशङ्खचक्रगदासिलाञ्छितचटुलचतुर्बाहुदुर्दर्शन आपूरितपाञ्चजन्यदेवदत्ततारशब्दितदशदिशामुखकुहरो धावितस्तद्देशं रथवरः।

उद्देसं रहवरो ।

दुर्यो । ततस्ततः ।

सुन्द । तदो भीमसेणधणञ्जएहिं अभिजुत्तं पिदरं पेक्खिअ ससंभमं बिअलिअं अवधूणिअ रअणसीसअं, आकसाकट्ठिदकठिणकोदण्डजीओ दाहिणहत्थबिक्खित्तसरपुङ्खबन्धणो (१)विघट्टणतुवराइदसारहीओ तं देसं उवगदो कुमालबिससेणो । (क)

दुर्यो । सावष्टम्भम् । ततस्ततः ।

सुन्द । तदोअ देव ! तेण आअच्छन्तेण एव्व कुमालबिससेणेन बिदलिदसिहासामलसिणिट्ठपुङ्खेहिं (२) कठिणकङ्कवत्तेहिं किसणबरणेहिं सिलाणिसिदसामलसल्लबन्धेहिं कुसुमिदो विअ तरु मुहुत्तएण सिलिमुहेहिं पच्छादिदो धणञ्जअस्स रहवरो । (ख)

उभौ । सहर्षम् । ततस्ततः ।

---

(१) दक्षिणहस्तो विक्षिप्तो यत्र तादृशं शरपुङ्खबन्धनम् यस्य ।

(२) विदलिता क्षुस्ता पिष्टेति यावत् शिखा तज्जन्याञ्जनमिव श्यामला स्निग्धाः चिक्कणाः पुङ्खा येषाम् ।

---

(क) ततो भीमसेनधनञ्जयाभ्यामभियुक्तं पितरं प्रेक्ष्य ससंभ्रमं विगलितमवधूय रत्नशीर्षक माकर्णाकृष्टकठिनकोदण्डज्यो दक्षिणहस्तविक्षिप्तशरपुङ्खबन्धनो विघट्टनत्वरायितसारथिक स्तं देशमुपगतः कुमारो वृषसेनः ।

(ख) ततश्च देव ! तेनागच्छतैव कुमारवृषसेनेन विदलितशिखाश्यामलस्निग्धपुङ्खैः कठिनकङ्कपत्रैः कृष्णवर्णैः शिलानिशितश्यामलशल्यबन्धैः कुसुमित इव तरु र्मुहूर्त्तेन शिलीमुखैः प्रच्छादितो धनञ्जयस्य रथवरः ।

सुन्द। तदो देव ! तीक्खविक्खित्तणिसिदभल्लबाणवरिसिणा धणञ्जएण ईसि विहसिअ भणिदं, अरे रे विससेणे ! पिदुणो वि दाव दे ण जुत्तं मह अभिमुहं ठादुं किं उण भवदो बालस्स, ता गच्छ अवरेहिं कुमारेहिं आओधेहि, एव्वं वाअं णिसमिअ गुरुअणाहिक्खेवेण उद्दीविअकोवोपरत्तमुहमण्डलविअम्भिअभिउड़ीभङ्गभीसणेण चावधारिणा कुमालविससेणेण वि मम्मभेदएहिं परुसविसमेहिं सुदिवहकिदप्पणएहिं (१) णिब्भच्छिदो गण्डीवी बाणेहिं ण उण दुट्ठवअणेहिं। (क)

राजा। साधु वृषसेन ! साधु, सुन्दरक ! ततस्ततः।

सुन्द। तदोअ देव ! णिसिदसराभिघादवेअणोपजादमस्सुणा (२) गण्डीविणा चण्डगण्डीवजीआसद्दणिज्जिदवज्जणि-

---

(१) श्रुतेः कर्णस्य पन्था स्तत्र कृतप्रणयैः आकर्णाकृष्टैरित्यर्थः दुष्टवचनपक्षे श्रुतेः श्रवणस्य वधे कठोरतया श्रुतियोग्यता राहित्ये कृतप्रणयैः कृतानुबन्धैः।

(२) निशितानां तीक्ष्णीकृतानां शराणामभिघातेन जातोमन्युः क्रोधोयस्य।

---

(क) ततो देव ! तीक्ष्णविक्षिप्तनिशितभल्लवाणवर्षिणा धनञ्जयेन ईषद्विहस्य भणितम्, अरे रे वृषसेन ! पितुरपि तावत्ते न युक्तं ममाभिमुखं स्थातुं, किं पुनर्भवतो बालस्य, तद्गच्छापरैः कुमारैरायुध्यस्व, एवं वाचं निशम्य गुरुजनाधिक्षेपेणोद्दीपितकोपोपरक्तमुखमण्डलविजृम्भितभ्रुकुटीभङ्गभीषणेन चापधारिणा कुमारवृषसेनेनापि मर्मभेदकैः परुषविषमैः श्रुतिपथकृतप्रणयैर्निर्भर्त्सितो गाण्डीवी वाणैर्न पुनर्दुष्टवचनैः। पक्षे श्रुतिवधकृत प्रणयैः।

ग्घादघोसेन बाणणिपड़णपड़िसिद्धदंसणप्पसरेण पत्थुदं सि-क्खाबलाणुरूवं किं वि अच्चरीअं। (क)

इत्यर्धोक्ते। साकूतम्। ततस्ततः।

चन्द। तदो अ देव! तं पेक्खिअ तस्स सत्तुणो समरव्वा-वारचउरत्तणं अविभाविअतूणीमुहधणुग्गुणगमणागमणबाण-सन्धाणमोक्खचडुलकरअलेण (१) कुमालविसेसेण सविसेसं पत्थुदं समलकम्मं। (ख)

इत्यर्धोक्ते। ततस्ततः।

चन्द। तदो अ देव! परिसेसिदरणव्वावारेसु विमुक्कचिर-णिवट्टिदवेराणुबन्धो दोसुं वि कुरुराअपण्डवबलेसु साहु वि-ससेण! साहु त्ति कलअलमुहरो वीरलोओ आलोइदुं प-उत्तो। (ग)

---

(१) अविभावितयोः अज्ञातयोः तूणीमुखधनुर्गुणयोः गमनागम-नयोः संधानमोक्षणयोः गुणसंयोजनपरित्यागयोश्च चटुलं चञ्चलं कर-तलं यस्य तेन।

---

(क) ततश्च देव! निशितशराभिघातवेदनोपजातमन्युना गाण्डीविना खण्डगाण्डीवज्याशब्दनिर्जितवज्रनिर्घातघोषेण बाणनिपतनप्रतिषिद्ध-दर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम्।

(ख) ततश्च देव! तत् प्रेक्ष्य तस्य शत्रोः समरव्यापारचतुरत्वमविभा-विततूणीमुखधनुर्गुणगमनागमनसन्धानमोक्षचटुलकरतलेन कुमारवृषसेने-नापि सविशेषं प्रस्तुतं समरकर्म।

(ग) ततश्च देव! परिशेषितरणव्यापारो विमुक्तचिरनिर्वर्त्तितवैरानुबन्धो द्वयोरपि कुरुराजपाण्डवबलेषु साधु वृषसेन! साधु इति कलकलमुखरो वीरलोक आलोकयितुं प्रवृत्तः।

दुर्यो। सविस्मयम्। ततस्ततः।

सुन्द। तदो अ देव ! अवहीरिदसअलधाणुक्कचक्कपराक्कमसालिणो सुदस्स तहाविहेण समलकम्मालम्भेण हरिसरोसकरुणासङ्कासङ्कड़े अणुवट्टमाणस्स, सामिणो अङ्गराअस्स णिवड़िआ सरपद्धइ भीमसेणे, बाप्पआउला दिट्ठी कुमालविसेणे। (क)

दुर्यो। सविस्मयम्। ततस्ततः।

सुन्द। तदो अ देव ! उभअबलप्पउत्तसाहुकारामरिसिदेण सरवरिसपज्जलिदेण गण्डीविणा तुरगेसु सारहिं वि रहवरे धणुं वि जीआइं वि णलिन्दलञ्छणे सिदादवत्ते व्वावारिदा समं सिलीमुहा। (ख)

दुर्यो। सभयम्। ततस्ततः।

सुन्द। तदो अ देव ! बिरहो लुणगुणकोदण्डो परिब्भमणमेत्तव्वावारप्पड़िसिद्धसरसंपादो मण्डलाइं (१) बिरइदुं प-

---

(१) मण्डलानि मण्डलाकारगतिभेदान् यैः शत्रुत्यक्तशराणां शरीरप्रवेशो न भवति तानीत्यर्थः।

---

(क) ततश्च देव ! अवधीरितसकलधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्म्मारम्भेण हर्षरोषकरुणाशङ्कासङ्कटे ऽनुवर्त्तमानस्य स्वामिनो ऽङ्गराजस्य निपतिता शरपद्धति भीमसेने, बाष्पाकुला दृष्टिः कुमारवृषसेने।

(ख) ततश्च देव ! उभयबलप्रवृत्तसाधुकारामर्षितेन शरवर्षप्रज्वलितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि ज्यायामपि नरेन्द्रलाञ्छने सितातपत्रे व्यापारिताः समं शिलीमुखाः।

उत्तो कुमालो । (क)

दुर्यो । साशङ्कम् । ततस्ततः ।

सूत । तदो देव ! सुदरहविद्ध सणामरिसुद्दोविदेण सामिणा अङ्गराएण अगणिअभीमसेणाभिजोएण पल्लत्थो धणञ्जअस्स उवरि सिलीमुहासारो । कुमालविससेणो बि परिजणोबणीदं अस्सं रहं आरुहिअ पुणोबि पउत्तो धणञ्जआभिजोए, भणिदं च कुमालेण रे रे तादाहिक्खेबमुहल ! मज्झमपण्डव ! मह सरा तुह सरीरं उज्झिअ अस्सिं ण णिबड़न्ति त्ति भणिअ सरसहस्सेहिं पण्डवसरीरं पच्छादिअ सिंहणादेण गज्जिदुं पउत्तो । (ख)

दुर्यो । सविस्मयम् । अहो ! बालस्य पराक्रमो मुग्धस्वभावस्यापि, ततस्ततः ।

सूद । तदोअ देव ! तस्स सरसहस्ससंपादं अवधुणिअ किरीड़िणा गहिदा रहोत्सङ्गादो झणन्तकणअकिङ्किणीजालझङ्कारविराइणो मेहोबरोहविमुक्कणहत्थलणिम्मला णिसिदसामलसिणिद्धमुहो बिबिहरअणप्पहाभासुरभीसणरमणिज्जदंस-

---

(क) ततश्च देव ! विरथो लूनगुणकोदण्डः परिभ्रमणव्यापारमात्रप्रतिषिद्धशरसंपातो मण्डलानि विरचयितुं प्रवृत्तः कुमारः ।

(ख) ततश्च देव ! सुतरथविध्वंसनामर्षोद्दीपितेन स्वामिना अङ्गराजेन अगणितभीमसेनाभियोगेन पर्य्यस्तो धनञ्जयस्योपरि शिलीमुखासारः । कुमारवृषसेनोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनञ्जयाभियोगे । भणितञ्च कुमारेण रे रे ताताधिक्षेपमुखर ! मध्यमपाण्डव ! मम शरास्तव शरीरमुज्झित्वा अन्यस्मिन् न निपतन्तीत्युक्त्वा शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः ।

णा सत्ती सोवहासं विमुक्का अ धणञ्जएण कुमालाभिमुहं ।(क)

दुर्यो । सविषादम् । अहह !

सुन्द । तदो अ देव ! पज्जलन्तीं सत्तिं पेक्खिअ विअलिदं अङ्गराअस्स हत्यादो ससरं धणु, हिअआदो वीरसुलहो उस्साहो, णअणदो बाप्पसलिलं, बअणदो, रसिदं हसिदं, अ धणञ्जएण, सिंहणादं विणादिदं विओदलेण अ दुक्कलं दुक्कलं त्ति आक्कन्दिदं कुरुबलेण ।(ख)

दुर्यो । सविषादम् । ततस्ततः ।

सुन्द । तदो अ देव ! कुमालबिससेणेण आकण्णाकिट्टणिसिदखुरप्पेण सुचिरं णिज्झाइअ अद्धपहे एव्व भाइरही विअ भअवदा विसमलोअणेण तिधा किदा सत्ती । ( ग )

दुर्यो । साधु वृषसेन ! साधु । ततस्ततः ।

सुन्द । तदो अ देव ! एतस्मिं अन्तरे किददकलकलमुहरेण

---

(क) ततश्च देव ! तस्य शरसङ्घपातमवधूय किरीटिना म्हीता रथोत्सङ्गात् क्वणत्कनककिङ्किणीजालझङ्कारविराविणी मेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाभासुरभीषणरमणीयदर्शन शक्तिः । सोपहासं विमुक्ता च धनञ्जयेन कुमाराभिमुखम् ।

(ख) ततश्च देव ! प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात् सशरं धनुः, हृदयात् वीरसुलभ उत्साहो, नयनाद् बाष्पसलिलं, वदनाद्रसितं, हसितञ्च धनञ्जयेन, सिंहनादो विनादितो वृकोदरेण च, दुष्करं दुष्करमित्याक्रन्दितं कुरुबलेन ।

(ग) ततश्च देव ! कुमारवृषसेनेन कर्णाकृष्टनिशितक्षुरप्रेण सुचिरं निध्याय अर्द्धपथे भागीरथीव भगवता विषमलोचनेन त्रिधा कृता शक्तिः । "तां दधार हरो राजन् ! गङ्गां गगनमेखलाम् । सा बभूव विसर्पन्ती त्रिधा राजन् ! समुद्रगा" ॥ इति वनपर्व्वणि १०९ अध्याये ।

वीरलोअसाहुवादेण अन्तरिदो समरतूररवो सिद्धचालणगण-विमुक्क कुसुमप्पकरेण पच्छादिदं समलाङ्गणं । (क)

दुर्यो । अहो ! बालस्य पराक्रमः । ततस्ततः ।

सुन्द । तदो अ देव ! भणिअं सामिणा अङ्गराएण भो विओदल ! असमत्तो तुह मह वि समलव्वावारो ता अणुमण मं मुहूत्तअं पेक्खामहे दाव क्खणमेत्तं मह वस्स स्स तुह भादुणो धणुव्वेदसिक्खाणिउणत्तणं तुह वि एदं पेक्खणिज्जं त्ति । तदो विरदा रणवावारणिव्बन्धादो मुहूत्तअं प्पसमिद-वेरा जादा दुवे अवि पेक्खआ भीमसेणाङ्गराआ । (ख)

दुर्यो । साभिप्रायम् । ततस्ततः ।

सुन्द । तदो अ देव ! एदस्सि अन्तरे सत्तिखण्डणामरिसि-देण गण्डीविणा एव्वं भणिदं अरे रे दुज्जोहणप्पमुहा ! इत्य-र्धोक्ते लज्जां नाटयति । (ग)

---

(क) ततश्च देव ! एतस्मिन्नन्तरे कृतकलकलमुखरेण वीरलोकसाधुवादे-नान्तरितः समरतूर्य्यरवः सिद्धचारणगणविमुक्तकुसुमप्रकरेण प्रच्छादितं समराङ्गणम् ।

(ख) ततश्च देव ! भणितं स्वामिना अङ्गराजेन भो वृकोदर ! असमाप्त-स्तव ममापि समरव्यापार स्तदनुमन्यतां मां मुहूर्त्तं प्रेक्षामहे तावत् क्षण-मात्रं वत्सस्य तव भ्रातुर्धनुर्वेदशिक्षानिपुणत्वं तवाप्येतत् प्रेक्षणीयमिति । ततो विरतौ रणव्यापारनिर्बन्धात् मुहूर्त्तं प्रशमितवैरौ जातौ द्वौ च प्रे-क्षकौ भीमसेनाङ्गराजौ ।

(ग) ततश्च देव ! एतस्मिन्नन्तरे शक्तिखण्डनामर्षितेन गाण्डीविना एवं भणितम् अरे रे दुर्य्योधनप्रमुखाः ! ।

दुर्यो। सुन्दरक! कथ्यतां परवचनमेतत्।

सुन्द। सुणादु देवो अरे दुज्जोहणप्पमुहा! कुरुबलसेणापहुणो अरे अविणअणइकसधार! कस्स! तुह्मे हिं मह परोक्खं एआइ पुत्तओ अहिमसुव्वावादिदो अहं उण तुह्माणं पेक्खन्ताणं एव्व कुमालविपसेणं सुमरिदव्वसेसं करोमि (१) त्ति भणिअ सगव्वं आप्फालिदं णेण णिग्घादघोसभीसणजीआरवं, गण्डीवं, सामिणा वि सज्जीकिदं कालपुट्टं। (क)

दुर्यो। सावहित्थम्। ततस्ततः।

सुन्द। तदो अ देव! एतस्सिं अन्तरे पड़िसिद्धभीमसेणसमलकम्मालम्भेण गण्डीविणा विरइदा अङ्गराअविससेणरहकूलंकसे दुवे वाणणदीओ। तेहिं वि दुवेहिं अस्सोसरिणेहदंसिदसिक्खाबिसेसेहिं अभिजुत्तो मज्झमपण्डवो। (ख)

---

(१) स्मर्तव्यं स्मरणं भावे तव्यः। तदवशेषो यस्य स्मरणीय मात्रं न तु दर्शनीयमित्यर्थः।

---

(क) शृणोतु देवः। अरे दुर्य्योधनप्रमुखाः कुरुबलसेनाप्रभवः! अरे अविनयनदीकर्णधार! कर्ण! युष्माभिर्मम परोक्षम् एकाकी पुत्रकोऽभिमन्युर्व्यापादितो ऽहं पुन र्युष्माकं प्रेक्षमाणानाम् (१) एनं कुमारद्वषसेनं स्मर्त्तव्यशेषं करोमीति भणित्वा सगर्व्वमास्फालितम् अनेन निर्घातघोषभीषणज्यारवं गाण्डीवं, स्वामिनापि सज्जीकृतं कालपृष्ठम्। (कर्णधनुर्नाम)। (१) प्रेक्षमाणानमादरे षष्ठी चानादरे पा० २,३, ३८, सू० अनादरे षष्ठी।

(ख) ततश्च देव! एतस्मिन्नन्तरे प्रतिषिद्धभीमसेनसमरकर्म्मारम्भेण गाण्डीविना विरचिते अङ्गराजद्वषसेनरथकूलङ्कषे द्वे वाणनद्यौ। ताभ्यामपि द्वाभ्यामन्योन्यस्नेहदर्शितशिक्षाविशेषाभ्यामभियुक्तो मध्यमपाण्डवः।

दुर्यो। ततस्ततः।

सुन्द। तदो अ देव! गण्डीविणा ताररसिदजीआणिग्घोसमेत्तबिसादबाणबरिसेण तह आअरिदं जह पत्तिहिं ण णहत्तलं ण सामी ण रहो ण धरणी ण कुमालो ण केदुबंसो ण बलाइं ण सारही ण तुलङ्गमो ण दिसाओ ण बीरलोओ अ संलक्खीअदि। (क)

दुर्यो। सविस्मयम्। ततस्ततः।

सुन्द। तदो अ देव! क्खणमेत्तं एव्व अदिक्कन्ते सरसंपादे सहरिससिंहणादे पण्डवसेसे सबिसादबिमुक्काक्कन्दे कौरवबले समुत्थिदो महन्तो कहअलो हा! हदो कुमालविससेणो त्ति (ख)

दुर्यो। सवाष्परोषम्। ततस्ततः।

सुन्द। तदो अ देब! कुमालं हदसारहि तुलङ्गं लूणाद-बत्तचामरकेदुबंसं सग्गप्पब्भट्टं बिअ सुलकुमालं हिअअम-म्मभेदिणा एक्केण सिलीमुहेण भिस्सदेहं रहमज्झे पल्लत्थम् पेक्खिअ अहं आअदो। (ग)

---

(क) ततश्च देव! गाण्डीविना तारस्वरसितज्यानिर्घोषमात्र * विज्ञात-बाणवर्षेण तथाचरितं पत्तिभि र्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतुवंशो न बलानि न सारथि र्न तुरङ्गमो वीरलोकश्च संलक्ष्यते। *बाणवर्षाणां शीघ्रत्वात् सन्धानादि न विभावितं किन्तु ज्याघातेन बाणवर्षोऽनुमित इत्यर्थः।

(ख) ततश्च देव! क्षणमात्रमेवातिक्रान्ते शरसंपाते सहर्ष सिंहनादे पाण्डवसैन्ये सविषादविमुक्ताक्रन्दे कौरवबले समुत्थितो महान् कलकलः, हा हतः कुमारवृषसेन इति।

(ग) ततश्च देव! कुमारं हतसारथितुरङ्गं लूनातपत्रचापचामरकेतुवंशं स्वर्गप्रभ्रष्टमिव सुरकुमारं हृदयमर्मभेदिना एकेन शिलीमुखेन भिन्नदेहं रथमध्ये पर्यस्तम् प्रेक्ष्य अहमागतः।

दुर्यो । साखम् । अहह कुमारवृषसेन ! अलमतः परं श्रुत्वा, हा वत्स ! वृषसेन ! हा मदङ्कदुर्ललित ! हा मदाज्ञाकर ! हा गदायुद्धप्रिय ! हा शौर्य्यसागर ! हा राधेयकुलप्ररोह ! हा प्रियदर्शन ! हा दुःशासननिर्विशेष ! हा सर्वगुरुवत्सल ! प्रयच्छ मे प्रतिवचनम् ।

(१) पर्य्याप्तनेत्रमचिरोदितचन्द्रकान्त
मुद्भिद्यमाननवयौवनरम्यशोभम् ।
प्राणापचारपरिवर्त्ति तदृष्टि दृष्टं
कर्णेन तत् कथमिवाननपङ्कजं ते ॥

सूत । आयुष्मन् ! अलमत्यन्तशोकावेगेन ॥

दुर्यो । सूत ! पुण्यवन्तो हि दुःखभाजो भवन्ति, अस्माकं पुनः ।

(२) प्रत्यक्षं हतबन्धूनामेतत् परिभवाग्निना ।
हृदयं दह्यतेऽत्यर्थं कुतो दुःखं कुतोव्यथा ॥

---

(१) पर्य्याप्तं संपूर्णं दीर्घमिति यावत् नेत्रं यस्य । अचिरोदितः बालोदितचन्द्र इव कान्तम् उद्भिद्यमानेनाविर्भवता नवयौवनेन रम्या शोभा यस्य तत् प्राणानामपचारे वियोगे तत्काले इत्यर्थः । परिवर्त्तिता अन्यथा भूता दृष्टिर्दर्शनमस्य एतादृशं तस्य मुखाब्जं कर्णेन कथं दृष्टं रम्यवस्तुनो मरणकाले विकृतिभावे तद्दर्शने बन्धूनामतीव दुःखदायकत्वमिति भावः ।

(२) प्रत्यक्षम् चक्षुषः समीपे हतबन्धूनां मत्तु भिर्हतस्वजनानामस्माकमित्यन्वयः परिभवएव अग्निस्तेन बन्धुमरणजन्यतिरस्कारवह्निना एतत् हृदयं दह्यते एवञ्च हृदयरूपाधारस्य दाहे कुतस्तरां दुःखव्यथयोः स्थितिरनेनात्यन्तदुःखभारो दर्शितः । एवञ्चास्माकमपुण्यभागित्वात् दुःखभागित्वमपि नेति यत् पुण्यवतोदुःखभागित्वमुक्तं तत्समर्थितमिति वेदितव्यम् ।

इति मोहमुपगतः ।

सूत । समाश्वसितु समाश्वसितु महाराजः ।

इति पटान्तेन वीजयति ।

दुर्यो । सबाष्पम् । भद्र ! सुन्दरक !, वयस्येन किं प्रतिपन्नमङ्गराजेन ।

सुन्द । तदो अ देव ! तधाहदस्स पुत्तस्स दंसणेण संगलिदं अस्सुजलं उज्झिअ अणवेक्खिदपरप्पहरणेण सामिणा अङ्गराएण अभिजुत्तो धणञ्जओ । तदो तं सुदवहामरिसिदं विमुक्कजीविदासं तधा परिक्कमन्तं पेक्खिअ भीमणउलसहदेवपञ्चालप्पमुहेहिं अन्तरिदो धनञ्जअस्स रहो । (क)

दुर्यो । ततस्ततः ।

सुन्द । तदो अज्जुणचावमहाप्पलअपओधरणिपड़िदसरधारासहस्सेहिं पूरिदेसु दिसामुहेसु सल्लेण भणिदो सामी अङ्गराओ, जहा अङ्गराअ ! हदतुलङ्गमो मथिदचक्कणेमिकूबरो दे रहो ता ण जुत्तं भीमज्जुणेहिं अहिजुज्जिदुंत्ति भणिअ णिब्बट्टिदो रहो, ओदारिदो सामी सन्दणादो बहुप्पआरं अ अस्सासिदो । (ख)

---

(क) ततश्च देव ! तथाहतस्य पुत्रस्य दर्शनेन संगलितमश्रुजलमुज्झित्वा अनपेक्षितपरप्रहरणेन स्वामिना अङ्गराजेनाभियुक्तो धनञ्जयः । ततस्तञ्च सुतवधामर्षितं विमुक्तजीविताशं तथा परिक्रामन्तं प्रेक्ष्य भीमनकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनञ्जयस्य रथः । अन्तरित आवृतः ।

(ख) ततश्च अर्ज्जुनचापमहाप्रलयपयोधरनिःसृतशरधारासहस्रैः पूरितेषु दिशामुखेषु शल्येन भणितो स्वाम्यङ्गराजः, यथा अङ्गराज !,

दुर्यो। ततस्ततः।

सूत। तदो अ सामिणा सुइरं विलम्बिअ परिअणो अभिहिदो अस्सं रहं मे उवणेहि त्ति परिअणोवणोदं रहं पेक्खिय मइ दिण्णदिट्ठी सुन्दरअ! एहि त्ति भणिदं अ, अहं वि उवगदो समीवं तदो अवणीअ सीसट्टाणादो पट्टिअं सरीरसंगलिदेहिं सोणिअविन्दुहिं दिण्णवअणं वाणं कदुअ अहिलिहिदो एसो देवस्स संलेहो, इति पत्रिकामर्पयति

दुर्यो। गृहीत्वा वाचयति। यथा स्वस्ति महाराज दुर्य्योधन! समराङ्गणात् कर्ण एतदन्ते कण्ठे गाढमालिङ्ग्य विज्ञापयति

(१) अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमान्
भ्रातृभ्योऽपि ममाधिकोऽयममुना जेयाः पृथासूनवः।

---

(१) इति अनेन पूर्वोक्तकथितप्रकारेण अहं सम्भावितः अध्यवसितः। एवं सम्भावितेन मया पुनः दुःशासनारिरपि न निहतः तथा च दुःशासनस्य त्राणं न कृतं नापि तद्वधकर्त्तृहननरूपप्रतीकारोऽपि कृतस्तथा च जीवता मया तव न किमपि कर्त्तमित्यर्थः इदानीं त्वं स्वयमेव भुजयोः वीर्येण वाष्पेण वा दुःखप्रतीकारम् एहि कुर्वित्यर्थः। एतेनात्मनो निर्वेदो दर्शितः। निर्वेदाश्रु मरणाध्यवसाय इति ध्वनितम्।

---

हतधुरङ्गमो मथितचक्रनेमिकूवरको रथस्तस्य युक्तं भीमार्जुनाभ्यामभियोक्तुमिति भणित्वा निवर्त्तितो रथः अवतीर्णः स्वामी स्यन्दनात्, बहुप्रकारश्च आश्वासितः। कूबरोऽस्त्री युगन्धर इत्यमरः।

(ख) ततश्च स्वामिना सुचिरं विलम्ब्य परिजनोऽभिहितोऽन्यं रथमुपनयेति। परिजनोपनीतमन्यं रथं प्रेक्ष्य मयि दत्तदृष्टि सुन्दरक! एहीति भणितश्च अहमुपागतः समीपम् ततोऽपनीय शीर्षस्थानात् पत्रिकां, शरीरसंगलितैः शोणितविन्दुभिः दिग्धवदनं वाणं कृत्वा अभिलिखित एष देवस्य संलेखः।

त्वत्सम्भावित इत्यहं न च हतो दुःशासनारिर्मया,
त्वं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥

दुर्यो । वयस्य ! कर्ण ! कर्ण ! किमिदं हतभ्रातृगतं मामपरेण वाक्शल्येन घट्टयसि। भद्र ! सुन्दरक ! अथेदानीं किमारब्धोऽङ्गराजः ?

सुन्द । देव ! अवणीदसरीरावरणो (१) अप्पवहकिदणिच्छओ सअं एव्व समरं मग्गदि । (क)

दुर्यो । श्रुत्वा सत्वरमुत्तिष्ठन् । सुन्दरक ! त्वमपि मद्वचनात् त्वरिततरं गत्वा वयस्यमङ्गराजं प्रबोधय न खलु जयाकाङ्क्षी भवानिदानीम्, अभिन्न एवायमावयोः संकल्पः, किन्तु,

(२) हत्वा पार्थान् सलिलमशिवं बन्धुवर्गाय दत्त्वा
मुक्त्वा बाष्पं सह कतिपयैर्मन्त्रिभिश्चारिभिश्च ।
कृत्वाऽन्योन्यं सुचिरमपुनर्भावि गाढोपगूढं
संत्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ वा ॥

---

(१) अपनीतमपसारितं शरीरावरणं शरीराच्छादकं कवचं येन । अथवा अपनीतशरीररक्षकः मरणोद्यतस्य शरीररक्षके यत्नाभावात् ।

(२) अशिवममङ्गलमन्त्येष्टिसमये देयं जलं दत्त्वा अनेन तर्पयित्वेत्यर्थः । अस्माकं दुःखेन दुःखिभिर्मन्त्रिभिररिभिः तेषामपि स्ववर्गीयनाशात् समानदुःखैः शत्रुभिश्च सह बाष्पं मुक्त्वा अपुनर्भावि जन्मान्तरे स्वस्वकर्मानुसारेण विभिन्नस्थानविभिन्नजातिप्राप्त्या पुनः असम्भावनीयं गाढोपगूढं दृढालिङ्गनमन्योन्यं सुचिरं कृत्वा दुःखितौ हतबान्धवशोकेन सन्तप्तौ

---

(क) देव ! अपनीतशरीरावरण आत्मवधकृतनित्यनिश्चयः स्वयमेव समरं मार्गयते ।

अथवा शोकं प्रति मया न किञ्चित् सन्देष्टव्यम्।

वृषसेनो न ते पुत्रो न मे दुःशासनोऽनुजः।

त्वां बोधयामि किमहं त्वं मां संस्थापयिष्यसि (१)॥

सुन्द। जं देवो आणवेदि (क) इति निष्क्रान्तः।

दुर्यो। अये! नेमिध्वनिरिव?

सूत। आयुष्मन्! एष सद्य एव संवर्द्धितो नेमिध्वनिः।(२)

दुर्यो। नूनं परिजनोपनीतो रथः, गच्छ त्वं, सज्जीकुरु

सूत। यथाज्ञापयति देवः। इति निष्क्रम्य पुनःप्रविशति।

दुर्यो। विलोक्य। किमिति नारूढोऽसि?

सूत। एष खलु तातोऽम्बा च सञ्जये-(३)-नाधिरूढौ देव-दर्शनमनुप्राप्तौ।

दुर्यो। कष्टमतिबीभत्स (४) माचरितं देवेन,

---

निर्वृतौ तद्दुःखप्रतीकारकरणेन तृप्तौ सन्तौ इमां शोकव्याकुलां इततहं स्वभावः नेदानीम्। अधुना वैरनिर्यातनाया अवश्यकर्त्तव्याया अव-शेषत्वाच्च तत्तुमोक्ष उचित इति भावः।

(१) संस्थापयिष्यसि शान्त्वयिष्यसि।

(२) एष श्रूयमाणः नेमिध्वनिः रथचक्रशब्दः सद्यस्व श्रवणोत्तर-कालएव संवर्द्धितः क्रमेण उपचितः ध्वनिहेतोः क्रमशः सन्निहितत्वात् ध्वनिः क्रमेण पुष्ट इत्यर्थः तथा च रथः क्रमशः सन्निहितो भवतीत्याशयः।

(३) सञ्जयेन सह रथमधिरूढौ अम्बातातौ।

(४) अति बीभत्समतिनिन्दितमनभीप्सितमिति यावत्।

---

(क) यद्देव आज्ञापयति।

सूत । गच्छ त्वं, स्यन्दनं तूर्णमुपपाहर, अहमपि तातदर्शनं परिहरन्नेकान्ते तिष्ठामि ।

सूत । देव! त्वदेकशेषबान्धवावेतौ कथमिव न समाश्वासयसि ।

दुर्यो । सूत ! कथमिव समाश्वासयामि विमुखभागधेयः पश्य,

(१) अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा,
घ्रातस्ताभ्यां शिरसि विनतोऽहञ्च दुःशासनश्च ।
तस्मिन् बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरहमुपगतः किन्नु वक्ष्यामि ताभ्याम् ॥

तथाप्यवश्यं वन्दनीयौ गुरू । इति निष्क्रान्तौ ।

इति चतुर्थोऽङ्कः ।

---

(१) प्रापिते जीविते तस्मिन् दुःशासने तथाविधां शोणितपानार्थ-वक्षःविदारणरूपाम् ।

इति श्रीतारानाथतर्कवाचस्पति भट्टाचार्य विरचिते
वेणीसंहारनाटक व्याख्याने चन्द्राख्यचतुर्थाङ्कव्याख्या ।

# पञ्चमोऽङ्कः ।

ततः प्रविशति रथयानेन गान्धारी सञ्जयो धृतराष्ट्रश्च ।

धृत । वत्स ! सञ्जयः ! कुरुकुलकाननैकशेषप्रवालो मे वत्सो दुर्योधनः कच्चित् जीवति वा, न वा ?

गान्धा । जाद ! जइ सच्चं जीवदि वच्छो, ता कस्सि, कधेहि तं उद्देसं । (क)

सञ्ज । नन्वेष महाराज एक एव न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

गान्धा । जाद ! एआइ त्ति भणासि, किं णु क्खु सम्पदं तस्स भादुसदं पास्से णत्थि । (ख)

सञ्ज । तात ! अम्ब ! अवतरतं स्वैरं रथात् ।

उभौ । अवतरणं नाटयतः ।

ततः प्रविशति सव्रीड़ोपविष्टो दुर्योधनः ।

सञ्ज । उपसृत्य । विजयतां महाराजः, नन्वेष तातोऽम्बया सह प्राप्तः, किं न पश्यसि महाराज ! ।

---

(क) जात ! यदि सत्यं जीवति वत्सः, तत् कस्मिन् कथय तमुद्देशम् ।

(ख) जात ! एकाकोति भणसि किन्तु खलु सांप्रतं तस्य भ्रातृशतं पार्श्वे नास्ति ।

इयौं । वैक्लव्यं नाटयति ।

धृत । (१) शल्यानि व्यपनीय कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णे कृतापाश्रयः ।
दूरान्निर्ज्जितशात्रवान् नरपतीनालोकयन् लीलया
सह्या पुत्रक ! वेदनेति न मया पापेन पृष्टो भवान् ॥

धृतराष्ट्रो गान्धारी च स्पर्शेनोपेत्य आलिङ्गतः ।

गान्धा । वच्छ ! अदिगाढ़प्पहारवेअणापज्जाउलस्स अ-
म्हासु वि ण दे प्पसरदि वाणी । (क)

---

(१) कङ्कटे कवचे उन्मोचिते देहादपसारिते कङ्कस्य पक्षिविशेषस्य वदनमिव वदनं येषां तैः कुटिलाग्रैः शल्योद्धारणयन्त्रभेदैः शल्यानि शस्त्राग्रस्थफलकानि शनैर्व्यपनीय अपसार्य्य तत्तत्क्षतशोषणार्थं व्रणपट्टकेषु व्रणशोषकौषधद्रव्यलिप्तपटखण्डेषु पटीति प्रसिद्धेषु बद्धेषु सत्सु हे पुत्रक ! दुःखितत्वादनुकम्पार्थे कः अनुकम्पितसुत ! वेदना शल्योद्धारणकृता पीड़ा सह्या सोढुं शक्या त्वयेति शेषः इति पापेन सत्पुत्रनाशात् दुर्भाग्यरता मया भवान् न पृष्टः पापेन मयेत्यनेन आत्मनः पुत्रशतनाशजन्यदुःखशल्यानि अधुनापि हृदयेऽवस्थितानि तानि च सह्यानीति सन्निदर्शनेन उद्धृतशल्यवेदनासहनं सुकरमिति ध्वनितम् । तस्य दुःखासहनाभावे हेतुं वदन् विशिनष्टि निर्जितशात्रवान् पराभूतरिपून् नरपतीन् लीलया अवस्थयैव दूरादालोकयन् तथा च यदि वेदना न सह्या तदा कुतोऽद्यापि द्विष्टावनिपतौ अवस्थितिभावः कर्णे कर्णमौलौ व्यपाश्रयः अनेन च सहायान्तराभावेऽपि नोत्साहहानिरिति सूचितम् ।

---

(क) वत्स ! अतिगाढ़प्रहारवेदनापर्य्याकुलस्य अस्मास्वपि न ते प्रसरति वाणी ।

धृत। वत्स दुर्य्योधन! किमकृतपूर्व्वः (१) सम्प्रति मय्यप्ययमव्याहारः।

गान्धा। वच्छ! जइ तुमं वि अम्हे णालवसि किं दाणीं दुस्सासणो दुम्मरिसणो अणो वा आलविस्सदि (क) इति रोदिति।

दुर्य्यो। (२) पापोऽहमप्रतिकृतानुजनाशदर्शी

तातस्य बाष्पपयसां तव चाम्ब! हेतुः।

दुर्जातमत्र विमले भरतान्वयेऽपि

किं मां सुतक्षयकरं सुत इत्यवैषि॥

गान्धा। जाद! अलं परिदेविदेण तुमं वि दाव एक्को अन्धजुअलस्स मग्गोवदेसओ चिरं जीव, किं मे रज्जेण वैरेण वा। (ख)

दुर्य्यो। मातः! किमप्यसदृशं विकृतं वचस्ते,

सुक्षत्रिया क्व भवती क्व च दीनतैषा।

निर्व्वत्सले! सुतशतस्य विपत्तिमेतां,

त्वं नानुचिन्तयसि रक्षसि मामयोग्यम्।

नूनं विचेष्टितमिदं सुतशोकस्य।

---

(१) पूर्व्वं न कृतः अकृतपूर्व्वः अव्याहारः मौनितेति यावत्।

(२) अप्रतिकृतस्य अनुजनाशस्य दर्शी हे अम्ब! हे मातस्तव तातस्य चानुजानां हेतुः।

---

(क) वत्स! यदि त्वमप्यस्मान् नालपसि किमिदानीं दुःशासनो दुर्म्मर्षणो ऽन्यो वालपिष्यति। तेषामभावान्न कः पुनरालपिष्यतीत्यर्थः।

(ख) जात! अलं परिदेवितेन त्वमपि तावदेकोऽन्धयुगलस्य मार्गोपदेशकश्चिरं जीव, किं मे राज्येन वैरेण वा।

सञ्ज। महाराज! किं वा अयं लोकवादो वितथः, न घटस्य कूपपाते रज्जुरपि तत्र प्रक्षेप्तव्येति।

दुर्यो। अपुष्कलमिदम् ननु उपक्रियमाणाभावे किमुपकरणेन। इति रोदिति।

धृत। दुर्योधनं परिष्वज्य। वत्स! समाश्वसिहि, समाश्वासय चास्मान् इमामतिदीनां मातरञ्च।

दुर्यो। तात! दुर्लभः समाश्वास इदानीं युष्माकं, किन्तु

(१) कुन्त्या सह युवामद्य मया निहतपुत्रया।
विराजमानौ शोकेऽपि तनयाननुशोचतम्॥

गान्धा। जाद! एदं एव्व सम्पदं प्पभूदं तुमं वि दाव एक्को जीवसि कं अस्स' अणुसोइस्सं ता जाद! प्रकाल्लो दे समरस्स प्पसीद एसो दे अञ्जली, णिवट्टेहि समरव्वाबारादो, (२) अपच्छिमं करेहि वअणं। (क)

धृत। वत्स! शृणु वचनं तवाम्बायाः मम च निहताशेषबन्धुवर्गस्य, पश्य,

---

(१) मया निहताः पुत्रा यस्यास्ताहश्या कुन्त्या सह विराजमानौ तुल्यदुःखतया सहैया वा प्रकाशमानौ युवां सुतान् अनुशोचतम्। तथा युवयोः पुत्रा यथा तत्पुत्रेण निहता एवं तत्पुत्रा अपि युवयोः पुत्रेण मया निहता इति विचिन्त्य शोकेऽपि चित्तस्थैर्यमाधत्तामिति भावः।

(२) वचनम् अपश्चिमम्पृष्ठगतं पुरो गतं पूज्यमिति यावत् कुरु।

---

(क) जात! एतदेव सांप्रतं प्रभुतं यत्त्वमपि तावदेको जीवसि, कमन्यमनुशोचिष्यामि, तज्जात! अकालस्ते समरस्य, प्रसीद, एष ते अञ्जलिः, निवर्त्तस्व समरव्यापारात्, अपश्चिमं कुरु वचनम्।

(१) दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमयतो भीतं जगत् फाल्गुनात्।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात! पितरावन्धाविमौ पालय॥

दुर्यो। समरात् प्रतिनिवृत्य किं मया कर्त्तव्यम्।

गान्धा। जं पिदा दे बिउरो वा भणिस्सदि तं अणु-चिट्ठ। (क)

सञ्ज। राजन्! एवमिदम्।

दुर्यो। सञ्जय! अद्याप्युपदेष्टव्यमस्ति?

सञ्ज। राजन्! यावत् [प्राणितव्यं तावदुपदेष्टव्या भूमयो विजिगीषवः] प्रज्ञावताम्।

दुर्यो। अक्रोधम्। शृणुमस्तावत् प्रज्ञावतः संप्रत्यनुरूपमुपदेशम्।

---

(१) ययोर्बलेन दायादाः ज्ञातयो न गणिता अवज्ञातास्तौ। कर्ण-स्येत्यत्रापि यस्येति विपरिणमय्यान्वयितव्यम् यस्य कर्णस्य बलेन न गणिता धृत्तयः। तस्य कर्णस्यात्मजं पुत्रं वृषसेनं तदग्रतएव शमयतः नाशयतः ततश्च येन तावत् स्वपुत्ररक्षणमेव कर्त्तुं न शक्तं तत्र कथाशा दूरेति भावः। मम शतपुत्रनाशने प्रतिज्ञावान् रिपुः अन्येषां मम वत्सानां निधनेन ना-शनेन हेतुना त्वयि तद्विषय एवावशिष्टप्रतिज्ञः। अतः वैरिषु मानं गर्वम् "अहमेव तेभ्यः सर्वथा गरीयान् इति" बुद्धिं मुञ्च तत्त्यागे फलमाह इमौ आर्त्तौ पालय वाक्यपालनेन शुश्रूषणेन आत्मरक्षणेन च पालयेत्यर्थः।

---

(क) यत् पिता ते विदुरो वा भणिष्यति तदनुतिष्ठ।

[ प्राणानाशस्तावदुपदेष्टव्यान्नृपतयः ]

धृत। वत्स! युक्तवादिनि सञ्जये किमत्र क्रोधेन, यदि प्रकृतिमापद्यसे तदहमेव [कथयामि, श्रूयताम्।]

दुर्यो। कथयतु तातः।

धृत। वत्स! किं विस्तरेण, सन्धत्तां भवानिदानीं युधिष्ठिरस्य समीप्सितेन पणेन।

दुर्यो। तात! तनयस्नेहवैक्लव्यादम्बा, बालिशत्वात् सञ्जयश्च, काममेवं ब्रवीतु, युष्माकमप्येवं व्यामोहः। अथवा प्रभवति पुत्रनाशजन्मा हृदयज्वरः, तात! अस्खलितभ्रातृशतस्यावधीरितवासुदेवशमोपन्यासः संप्रति दृष्टपितामहाचार्य्यानुजराजचक्रविपत्तिः शरीरमात्रस्नेहात् उदात्त-(१)-पुरुषव्रीड़ावहं असुखावसानञ्च कथमिव करिष्यति दुर्य्योधनः सह पाण्डवैः सन्धिम्। अन्यच्च नयवेदिन् सञ्जय!

हीयमानान् किल रिपून् नृपाः सन्दधते कथम्।
दुःशासनेन हीनोऽहं सानुजः पाण्डवोऽधुना॥

धृत। वत्स! एवं गतोऽपि मत्प्रार्थनया किं न करोति युधिष्ठिरः। अन्यच्च [सर्व्वं दैवापकृष्टं (२)मन्यते] युधिष्ठिरः।

(१) उदात्तानामुत्तमानां पुरुषाणां व्रीड़ावहं लज्जाकरम्।

(२) सर्वं दैवापकृष्टं दैवाधीनम् सर्वदैवापकृष्टमिति पाठे भवद्भ्य इति शेषः तथाच तस्याहङ्कारित्वाभावात् सर्वतएवात्मा पकर्षज्ञानं किं पुनर्भवद्भ्यः। पाठान्तरे सर्वमेवापकृतं भवद्भ्यः भवतां कृतमपकारं न मन्यते नानुस्मरतीत्यर्थः।

---

[भवन्तं ब्रवीमि]

[सर्व्वमेवापकृतं न मन्यते भवद्भ्यः।]

दुर्यो । कथमिव ।

दूत । श्रूयतां प्रतिज्ञा युधिष्ठिरस्य नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान् संधारयामीति, बहुच्छलत्वात् संग्रामस्यानुजनाशं शङ्कमानो यथैव भवते (२) रोचते तथैवासौ शक्तः सन्धातुम् ।

धृत । एवमिदम् ।

गान्धा । उपत्तिजुत्तं पडिवज्जस्स पिदुणो वअणं । (क)

दुर्यो । तात ! अम्ब ! सञ्जय !

एकेनापि विनाऽनुजेन मरणं पार्थः प्रतिज्ञातवान्
भ्रातॄणां निहते शते विषहते दुर्य्योधनो जीवितुम् ।
तं दुःशासनशोणिताशनमरिं भिन्दन् गदाकोटिभि-
र्भीमं दिक्षु न विक्षिपामि कृपणःसन्धिं विदध्यामहम् ॥

गान्धा । हा जाद दुस्सासण ! हा दुम्मरिसण ! हा विकण्ण ! हा [वीरसदप्पसवणी गान्धारी दुक्खसदं पसूदा न सुदसदं । ] (ख) सर्वे रुदन्ति ।

(२) भवत इति रुच्यर्थानां प्रीयमाणः [ पा॰ १,४,३३,सू॰ ] संप्रदानसंज्ञायां चतुर्थी ।

(क) उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम् ।

(ख) हा जात दुःशासन ! हा दुर्म्मर्षण ! हा विकर्ण ! वीरशतप्रसविनी गान्धारी दुःखशतं प्रसूता, न सुतशतम् ।

[अस्सुदपूव्वा कस्स वि लोए इदिसी विपत्ती । ]
अश्रुतपूर्व्वा कस्यापि लोके ईदृशी विपत्तिः ।

सञ्ज । वाष्पस्तुतं स्तम्भ्य । तात ! प्रतिबोधयितुं महाराजमिमां भूमिं युवामागतौ, तदात्मापि तावत् संस्तभ्यताम् ।

धृत । वत्स ! एवं विमुखेषु भागधेयेषु त्वयि चामुञ्चति मानबन्धमरिषु त्वदेकशेषजीविताबलम्बनेयं तपस्विनी गान्धारी कमवलम्बतां शरणमहञ्च ।

दुर्यो । श्रूयताम् । कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विषः

प्रणतशिरसां राज्ञां चूड़ासहस्रकृतार्चनाः ।

अभिमुखमरीन् घ्नन्तः संख्ये हताः शतमात्मजाः

वहतु सगरेणोढ़ां तातो धुरं सहितोऽम्बया ।

विपर्य्यये त्वस्याधिपतेरुल्लङ्घितः क्षात्रधर्म्मःस्यात् ।

नेपथ्ये महान् कलकलः ।

गान्धारी । आकर्ण्य सभयम् । सञ्जअ ! किं एदं हाहाकारमिस्सं तूररसिदं सुणीअदि । (क)

सञ्ज । अभूमिरियमेवंविधानां भीरुजनानाम् ।

धृत । वत्स सञ्जय ! ज्ञायतामतिभैरवः खलु विस्तारी हाहारवः, कारणेनास्य महता भवितव्यम् ।

दुर्यो । तात ! प्रसीद, पराङ्मुखं खलु दैवमस्माकं यावदपरमपि किञ्चिदत्याहितं न श्रावयति तावदेवाज्ञापय मां संग्रामावतरणाय ।

गान्धा । जाद ! मुहुत्तअं दाव मं मन्दभाइणीं समस्ससेहि । (ख)

---

(क) सञ्जय ! किमेतत् हाहाकारमिश्रं तूर्य्यरसितं श्रूयते ।

(ख) जात ! मुहूर्तं तावत् मां मन्दभाग्यां समाश्वासय ।

सूत । वत्स ! यद्यपि भवान् समराय कृतनिश्चयस्तथापि रहःपरप्रतीघातोपायश्चिन्त्यताम् ।

दुर्यो । (१)प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रहः
किं वा तेन कृतेन तैरिह कृतं यन्न प्रकाश्यं रणे ।

गान्धा । जाद ! एआइ तुमं को दे सहाअत्तणं करिस्सदि ।(क)

दुर्यो । एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः ।
शाम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी ॥

नेपथ्ये । कलकलानन्तरम् । भो भो योधाः ! निवेदयन्तु भवन्तः कौरवेश्वराय, इदं महत् कदनं प्रवृत्तम् । अलमप्रियश्रवणपराङ्मुखतया, यतः कालानुरूपं प्रतिविधातव्यमिदानीम् ।

तथा हि । (२)त्यक्तप्राजनरश्मिरङ्कितततनुः पार्थाङ्कितैर्मार्गणै

---

(१) प्रत्यक्षमक्षिसमीपे हता बान्धवा यैस्तादृशाः परे शत्रवः रहो गुप्त्या हन्तुं न योग्याः प्रत्यक्षकृतापकाराणां प्रत्यक्षमेवापकारः कर्त्तुं योग्यः अन्यथा अयशः स्यादिति भावः । इह जगति रणे यत् कर्म्म तैरपि परैरपि प्रकाश्यं प्रशंसनीयं न भवति तेन कर्म्मणा कृतेन किं प्रयोजनं अपि तु किमपि नास्तीत्यर्थः । दैवं भाग्यमेव शाम्यं शान्तिमनुकूलतामेतु भजताम् भाग्य शान्त्यैव मेदिनी निष्पाण्डवा भवेत् "पौरुषं दैवसम्पत्त्या काले फलति पार्थिवः । त्रयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहमिति" स्मृत्या सर्वेषां कर्म्मणां दैवायत्तत्वस्य प्रतिपादनात् तदानुकूल्यमेव मार्गये नान्यसहायापेक्षेति भावः ।

(२) त्यक्तौ शोकवशात् मुक्तौ प्राजनरश्मी कशादिचालन तोदनशक्तौ "प्राजनं तोदनं तोत्त्र"मित्यमर प्रसिद्धः येन तादृशः पार्थाङ्कितैः पार्थ-

---

(क) जात ! एकाकी त्वं, कस्ते सहायत्वं (साहाय्यं) करिष्यति ।

वाहैः स्यन्दनवर्त्मनां परिचयादाकृष्यमाणः शनैः ।
वार्त्तामङ्गपतेर्विलोचनजलैरावेदयन् पृच्छतां
शून्येनैव रथेन याति शिविरं शल्यः कुरून् कम्पयन् ॥

दुर्यो । श्रुत्वा । साशङ्कम् । सूत ! केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितं, ज्ञायतां, कः कोऽत्र भोः ?

प्रविश्य संभ्रान्तः सूतः । हा ! हतोऽस्मि । इत्यात्मानमपातयत् ।

दुर्यो । कथय कथय ।

सूत । आयुष्मन् ! किमन्यत्,

(१) स्वल्पेन यथा शल्येन मूर्च्छितः प्रविशता जनौघोऽयम् ।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन ॥

दुर्यो । हा वयस्य कर्ण ! इति मोहमुपागतः ।

गान्धा । जाद ! समस्ससिहि समस्ससिहि । (क)

सञ्ज । समाश्वसिहि समाश्वसिहि महाराज !

---

नामाङ्कितैः संकुलयुद्धे हि कस्येमे शरा इति ज्ञापनाय योद्धृभिः शराः स्व स्व नामाङ्किताः क्रियन्त इति युद्धमर्यादा । स्यन्दनवर्त्मनां वाहैः परिचयात् तेन अचालिता अपि अश्वाः संस्कारवशात् येन पथा गता तेनैव पथा प्रत्यागच्छन्तीत्यश्वानां स्वभावः । विलोचनजलैः रश्रुजलैः पृच्छतां कर्णस्य वार्त्तां संवादमावेदयन् शून्येन रथरहितेन कर्णस्य रथेन शिविरं सेनासन्निवेशस्थानं छावनीति प्रसिद्धस्थानं याति ।

(१) स्वल्पेनापि प्रविशता शल्येन यथा जनौघः मूर्च्छितो भवति तथा मनोरथमिव शून्यं कर्णशून्यं कर्णस्य रथमधिरूढेन शल्येन प्रविशता लोकौघः कुरुबलस्थजनौघो मूर्च्छितः ।

---

(क) जात ! समाश्वसिहि समाश्वसिहि ।

ष्ट्र । भोः ! कष्टं कष्टम् ।

भीष्मे द्रोणे च निहते य आसीदवलम्बनम् ।

पुत्रस्य मे सुहृत् प्रेयान् राधेयः सोऽप्ययं हतः ॥

वत्स ! समाश्वसिहि समाश्वसिहि, भो हतविधे !

अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः

शोच्यां दशामुपगतः सह भार्य्ययाहम् ।

अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे

दुर्य्योधनेऽपि हि कृतो भवता निराशः ॥

वत्स ! दुर्य्योधन ! समाश्वासय तपस्विनीं मातरम् ।

दुर्यो । लब्धसंज्ञः ।

(१) अयि कर्ण ! कर्णसुखदां प्रयच्छ मे

गिरमुद्गिरन्निव मुदं मयि स्थिराम् ।

सततावियुक्तमकृताप्रियं प्रियं

वृषसेनवत्सल ! विहाय यासि माम् । इति पुनर्मोहमुपागतः ।

सर्वे समाश्वासयन्ति ।

दुर्यो । समाश्वस्य । मम प्राणाधिके तस्मिन्नङ्गानामीश्वरे हते ।

उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात ! का कथा ॥

---

(१) सततमवियुक्तमेकत्र स्थितत्वात् विरहाभावः एकत्रस्थितस्याप्रिय-करणे त्यज्यता स्यात्तदपि नास्तीत्याह अकृताप्रियम् एवंभूतमित्रपरि-त्यागे कारणं विवक्षुः संबोधयति वृषसेनवत्सल इति न च पुत्र मम स्नेह इत्युक्तेः पुत्रवात्सल्यस्य सर्वतः प्रधानत्वात् तदनुरोधेनैव मां परित्यज्य वृष-सेनं गत इति भावः ।

अपिच। (१) शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासनं तमधुना न च बन्धुवर्गम्।
येनातिदुःश्रवमसाधु कृतन्तु कर्ण
कर्त्तास्मि तस्य निधनं समरे कुलस्य॥

गान्धा। जाद! सिढिलेहि दाव क्खणमेत्तं बाप्पमोक्खं।(क)

धृत। वत्स! क्षणमात्रं परिमार्जयाश्रूणि।

दुर्यो। मामुद्दिश्य त्यजन् प्राणान् केनचिन्न निवारितः।
तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्य्यते॥

धृत! केनेदमसम्भावितमस्मत् कुलान्तकरं कर्म्म कृतं स्यात्।

धृत। आयुष्मन्! एवं किल जनः कथयति।
(२) भूमौ निमग्नचक्रस्वक्रायुधसारथेः शरैस्तस्य।
निहतः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य॥

दुर्यो। कर्णाननेन्दुस्मरणात् क्षुभितः शोकसागरः।
वाड़वेनेव शिखिना पीयते क्रोधजेन मे॥
अम्ब! तात! प्रसीदतम्।

---

(१) शोच्यमपि अवश्यशोचनार्हं वत्समनुजं न शोचामि तदपेक्षयापि अतिस्नेहपात्रत्वात् अधिकशोच्ये कर्णे असाधु येन कृतं तस्य कुलस्य निधनं कर्त्तास्मि।

(२) भूमौ निमग्नं चक्रं यस्य। आसन्नकाले तस्य रथचक्रं "भूमिश्वभ्रे पततामिति ब्राह्मणेनाभिशापो दत्त" स्तेन भूमि निमग्नचक्रः साच कथा कर्णपर्व्वणि ४६अध्यायेऽनुसन्धेया।

---

(क) जात! शिथिलय तावत् क्षणमात्रं बाष्पमोक्षम्।

ज्वलनः शोकजन्मा मामयं दहति दुःसहः।
समानायां विपत्तौ मे वरं संशयितुं रणे॥

धृत। दुर्योधनं परिष्वज्य,

(१) भवति तनय! सत्यं संशयः साहसेषु
द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम्।
अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड!
छलबहलमरीणां सङ्गरं हा! हतोऽस्मि।

गान्धा। जाद! तेन एव्व सुदसदकदन्तेण विओदरेण समं समरं मग्गसि। (क)

दुर्यो। अम्ब! तिष्ठतु तावत् वृकोदरः।

(२) पापेन येन हृदयस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनामलेन्दुः।

---

(१) भीमं भीमसेनं भीमं भीषणकर्माणमुत्प्रेक्ष्य उद्भाव्य। एतद् हृदयं द्रवति त्रस्यतीत्यर्थः। ते तव चेष्टितं रणव्यापारः अनिकृतिनिपुणम् निकृतौ शाठ्ये अनिपुणमच्छलानुबन्धीत्यर्थः अरीणाञ्च सङ्गरं समरं बहुच्छलम्। न्यस्तशस्त्रस्य द्रोणस्य तैर्हिंसनात् छलबाहुल्यमित्येवं पराभवाशंसया हतोऽस्मि बहुच्छल पाण्डवकर्त्तृकभवन्नाशस्याशंसनेनाहमपि नष्ट इत्यर्थः जयो रनृशप्रहारिणामित्युक्तेस्तेषां छलप्रहारित्वेन जयावश्यम्भावात् भवतश्च तन्नास्तीति विशेषणेनाह मानशौण्ड! हे मानप्रधान! छलयुद्धे लोकेऽपयशः स्यादिति तद्भीरुणा मानवता त्वया तत् न क्रियते इति समुदितार्थः।

(२) हृदयस्य मनोरथः अत्यन्ताभिलषणीयरूपः मे ममास्पदत्वात्।

---

(क) तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गयसे।

पुत्रस्तवाम्ब ! तव तात ! नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु ॥

सूत ! अलमिदानीं कालातिपातेन, सज्जं मे रथमुपहर । त्वञ्चेद्बिभेषि पाण्डवेभ्यः तिष्ठ गदामात्रसहाय एव समरभुवमवतरामि ।

सूत। अलमन्यथा सम्भावितेन अयमहमागत एवेति निष्क्रान्तः ।

धृत। वत्स दुर्य्योधन ! यदि स्थिर एवास्मान् दग्धुमयं ते व्यवसायस्तत् सन्निहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम् ।

दुर्यो। नन्वभिषिक्त एव ।

गान्धा। कतरो उण सो जहिं एदं हदासं ओलम्बिस्सं (क)

धृत। किं वा शल्यः उत वा अश्वत्थामा ?

दुर्यो। (१) कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा ।
अनिवारितसम्पातैरयमात्माऽश्रुवारिभिः ॥

---

सर्वाङ्गेषु चन्दनरसरूपः आप्यायनकरत्वात् नयनस्य इन्दुस्वरूपस्तृप्तिसाधनत्वात् हे अम्ब ! मातस्तव पुत्रः पुत्रतुल्यः वात्सल्यास्पदत्वात् हे हे तात ! तव नयैकशिष्यः नये नीतौ एकशिष्यः प्रधान शिष्यः । एतादृशः कर्णो येन पापेन हतः निहतस्तस्मिन् शराः पतन्तु । तेनैव सह योत्स्ये इत्यर्थः ।

(१) अभिषिक्त इति पूर्वोक्तानुकर्षेण आत्माभिषिक्त इत्यर्थः । इह उद्वेगाख्यं नाटकाङ्गं "नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तित" इति दर्पणोक्तेः ।

---

(क) कतरः पुनः स यत्रेमां हताशामवलम्बिष्ये ।

नेपथ्ये । कलकलं कृत्वा । भो भोः कौरवबलप्रधानयोधाः ! अलमस्मानवलोक्य भयादितस्ततो गन्तुम्, कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति । सर्वे ससंभ्रममाकर्णयन्ति ।

प्रविश्य संभ्रान्तः सूतः । आयुष्मन् !

प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।

सर्वे । कस्य कस्य ?

सूत । स कर्णारिः सच क्रूरो वृककर्मा (१) वृकोदरः ।

गान्धा । सभयम् । जाद ! किं एत्थ सम्पदं पड़िपज्जिदव्वं(क)

दुर्यो । ननु सन्निहितैवेयं गदा ।

गान्धा । हा हदह्मि अहं मन्दभाइणी (ख)

दुर्यो । अलमिदानीं कार्पण्येन । सञ्जय ! सञ्जय ! रथमारोप्य पितरौ शिविरं प्रवेशय । प्राप्तोऽस्मच्छोकापनोदप्रणयी जनः ।

धृत । वत्स ! क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे ।

दुर्यो । तात ! किमनेनोपलम्भेन तद्गम्यताम् ।

धृतराष्ट्रो गान्धारी च किञ्चिद्गत्वा तिष्ठतः ।

ततः प्रविशतो रथारूढौ भीमार्ज्जुनौ ।

भीम । भो भोः सुयोधनानुजीविनः ! किमिति ससम्भ्रम-मयथातथं सञ्चरन्ति भवन्तः अलमावयोः शङ्कया ।

---

(१) वृकस्य व्याघ्रविशेषस्य कर्मैव कर्म यस्य क्रूरकर्मेत्यर्थः ।

---

(क) जात ! किमत्र प्रतिपत्तव्यम् ।

(ख) हा हतास्म्यहं मन्दभाग्या ।

(१)कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनमरुत् पाण्डवा यस्य दासाः
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्य्योधनोऽसौ कथयत न रुषाद्रष्टुमभ्यागतौ स्वः॥

धृत। सञ्जय! दारुणः खलु उपक्षेपः पापस्य।

सञ्ज। तात! कर्म्मणा कृतनिःशेषविप्रियाः संप्रति वाचा व्यवस्यन्ति।

दुर्यो। सूत! ब्रूहि गत्वोभयोः अयं तिष्ठतीति।

सूत। यथाज्ञापयति देवः। तावुपसृत्य। ननु भो वृकोदरार्ज्जुनौ! एष महाराजस्तातेन अम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठति॥

अर्ज्जु। आर्य्य! प्रसीद, न युक्तं पुत्रशोकोपपीड़ितौ पितरौ पुनरस्मद्दर्शनेनोद्वेजयितुं, तन्नच्छावः।

भीम। मूढ़! अनुल्लङ्घनीयः सदाचारः न युक्तमनभिवाद्य गुरून् गन्तुम्। उपसृत्य। सञ्जय! पित्रो र्नमष्कृतिं श्रावय। अथवा तिष्ठ, स्वयमेव श्रावयावः। इति रथादवतरतः।

भीम। विश्राव्य स्वकर्म्म नाम च वन्दनीया गुरवः।

---

(१) द्यूतमेव च्छलानि तेषां कर्त्ता जतुमयं जतुप्रचुरं प्राचुर्य्यार्थे मयट् शरणं गृहम् "शरणं गृहरक्षित्रो"रित्यमरः। तस्योद्दीपनः विरोचनद्वारा दाहकः। कृष्णायाः द्रौपद्याःकेशस्य उत्तरीयस्य च व्यपनयनेऽपसारणे मरुदिव वायुरिव, पटुरिति दर्पण धृतपाठः। पाण्डवाः यस्य दासा द्यूतजयेन दासत्वेन संभाषिताः। इह छलाख्यं सन्ध्यङ्गं "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छल"मिति दर्पणोक्तेः।

अर्जुन। उपगम्य। तात ! अम्ब !

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ।

भीम। (१) [चूर्णिताशेष] कौरव्यः क्षीवो दुःशासनासृजा ॥
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति ॥

धृत। दुरात्मन् वृकोदर ! न खल्विदं भवतैव केवलं सपत्नानामपकृतं, यावत् क्षत्रं तावत् समरविजयिनो जिता हताश्च वीराः, तत् किमेवं विकत्थनाभिरस्मानुद्वेजयसि ॥

भीम। तात ! अलमलं मन्युना ।

(१) कृष्णा केशेषु कृष्टा तव सदसि वधूः पाण्डवानां नृपैर्यैः

---

(१) निहता अशेषाः कौरवा यैः। दुःशासनासृजा तद्वक्षःस्थलरुधिरपानेन क्षीवो मत्तः भङ्क्ता भाविभञ्जनकारी भविष्यदर्थे तृन्। इह व्यवसायनामकं नाटकाङ्गं "व्यवसायश्च विज्ञेयः प्रतिज्ञा हेतुसम्भव" इति दर्पणोक्तेः। इह निरुक्तिरलङ्कारः। "पूर्व्वसिद्धार्थ कथा निरुक्तिरिति कीर्त्तित"मिति दर्पणोक्तेः।

(१) ये पापकारिणः ये च पापद्रष्टारोऽनुमन्तारो वा ते सर्वे एव नृपाः येन स्वकृतापराधेनैव हेतुना क्रोधवह्नौ कृष्णाक्रोधाग्नौ क्षयं क्षुद्रं यत् मन्वभकुलं तदवशेषैः तत्तुल्यानादरेणैव अनायासेनैवेत्यर्थः दग्धात् तस्मात् कारणात् श्लाघये न तु, दर्पादिप्रकाशनाय यतः हे तात ! त्वमति गुरुषि पुत्रपौत्रादिकृते कर्मणि साक्षी उदासीनः मध्यस्थः न तु तत्कर्मणि कर्त्तेत्यर्थः ।

---

[ निहताशेष ] दर्पणसम्मतपाठः ।

सर्व्वे ते क्रोधवह्नौ कृतशलभकुलावत्नया येन दग्धाः ॥
एतस्मात् श्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पात्
पुत्रैः पौत्रैश्च कर्म्मण्यतिगुरुणि कृते तात ! साक्षी त्वमेव ॥

दुर्यो। अरे रे मरुत्तनय ! किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म्म श्लाघसे। अपि च।

(१)कृष्टा केशेषु भार्य्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं क्ष्मापतीनां मम भुवनपतेराज्ञया द्यूतदासी।
अस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्य्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ॥

भीमः। दुरात्मन् ! एष न भवसि इति सक्रोधमुत्थाय हन्तुमिच्छति।

धृत। धृत्वोपवेशयति।

भीम। क्रोधं नाटयति।

अर्ज्जु। आर्य्य ! किमत्र क्रोधेन।

(२) अप्रियाणि करोत्येष वाचा शक्तो न कर्म्मणा।

---

(१) तव तव च भीमार्ज्जुनयोरुभयोः सम्बोध्यत्वात् तस्य राज्ञः युधिष्ठिरस्य तयोः नकुलसहदेवयोर्वेत्याक्षेपे अनादरे वा क्ष्मापतीनां नृपाणाञ्च प्रत्यक्षं द्यूतदासी द्यूतेन जितत्वात् दासीव अपमानयथेष्टाचरणयोग्यत्वात् केशेषु कृष्टा। अस्मिन् वैरानुबन्धे विद्वेषजनके कर्मणि तैः तद्द्रष्टृभिर्नृपैः किमपकृतमपराद्धं मदाज्ञयैव कृतत्वात् मामेव जित्वा गर्व्वयुक्तो नार्व्वाचिन्त्यर्थः। इह संफेटनामकं नाटकाङ्गं "संफेटो रोषभाषण"मिति दर्पणोक्तेः। दर्पपकृता तु अरे रे मरुत्तनयेत्यादिवाक्यमादावुक्त्वेदं पद्यमुदाहृतं तेन गद्यपद्यसमुदायः संफेटः।

(२) यथाविकाररोगवतः प्रलापा एवं शतभ्रातृवधव्यसनविकारवतस्ते-

हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥

भीम । अरे रे भरतकुलकलङ्क !

(१) अत्रैव किं न विशसेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन् !
विघ्नं गुरुर्न कुरुते यदि मत्गदाग्र
निर्भिद्यमानरणितास्थनि ते शरीरे ।

अन्यच्च, मूढ़ !

(२) शोकं स्त्रीवन्नयनसलिलं यत् परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि ।
आसीदेतत् तव कुनृपतेः कारणा जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥

दुर्यो । दुरात्मन् ! भरतकुलाधम ! द्यूतदास ! पाण्डव-पशो ! नाहं भवानिव विकत्थनाप्रगल्भः । किन्तु,

---

नास्य कार्य्यसामर्थ्यं ध्वनितम् । इह च्छादनं नाटकाङ्गं "तदाकुच्छादनं पुनः । कार्य्यार्थमपमानादेः सहनं खलु यद्भवे"दिति दर्पणोक्तेः ।

(१)विशसेयं नाशयेयं मद्गदाग्रेण निर्भिद्यमानानि अतएव रणितानि शब्दायमानानि अस्थीनि यत्र तादृशे शरीरे तथा करणे यदि गुरुस्तातो-विघ्नं न कुर्य्यादित्यर्थः । अस्थिशब्दस्य सुस्य गौणपरत्वेऽपि अनङ् तेन पक्षेऽनोऽल्लोपात् रूपसिद्धिः रणितास्थिनीति पाठस्तु प्रामादिकः अनङा-देशस्य नित्यत्वात् ।

(२) युष्मत्कुलं कमलिनीव सुखच्छेद्यत्वात् तत्र कुञ्जरे हस्तिसदृशे भीम-सेने क्रुद्धे सति यत् स्त्रीवत् चक्षुर्जलं त्याजितोऽसि न पुनः प्रतिकर्त्तुं समर्थ इति भावः । यच्च भ्रातृवक्षोविदारणे साक्षी कृतोऽसि जीवितस्य त-देतत्कारणा तीव्रवेदना ':कारणातीव्रवेदने' त्यमरः ।

(१) द्रक्ष्यन्ति न चिरात् सुप्तं पाण्डवास्त्वां रणाजिरे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम् ॥

भीम । विहस्य । यद्येवं नाश्रद्धेयो (२) भवान्, तथापि प्रत्यासन्नमेव कथयामि ।

(३) पीनाभ्यां मद्भुजाभ्यां भ्रमितगुरुगदाघातसञ्चूर्णितोरोः
क्रूरस्याधाय पादं तव शिरसि नृणां पश्यतां श्वःप्रभाते ।
त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेनानखाग्रं
स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥

नेपथ्ये । भो ! भो भीमसेनार्ज्जुनौ ! एष खलु निहताशेषारातिचक्र आक्रान्तपरशुरामाभिरामयशाः (४) प्रतापतापितदिङ्मण्डलस्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति ।

उभौ । किमाज्ञापयत्यार्य्यः ? पुनर्नेपथ्ये ।

---

(१) मद्गदया भिन्नानि यानि वक्षोऽस्थीनि तेषां वेणिका प्रवाहः रुधिरप्रवाहः सैव भीमं भयानकं भूषणं यस्य तथाभूतम् "वेणी तु केशवेशे स्यात् प्रवाहेऽपि निगद्यते" इति धरणिः । ततः स्वार्थे कः ।

(२) नाश्रद्धेयो न अश्रद्धेयो विश्वसनीयवचन इत्यर्थः ।

(३) पश्यतां नृणां पुर इति शेषः स्त्यानेन पिण्डीभूतेन घनेनेत्यर्थः । आक्तः लिप्तः सन् त्वमेव मुख्यो यस्य तादृशं यद्भ्रातृचक्रं भ्रातृशतं तस्योद्दलनेन उन्मूलनेन गलन्ति यानि असृञ्जि रक्तानि तानि चन्दन इव तेन भीमं भयानकं भूषणं श्वः परदिने स्वयमनुभवितास्मि । तथा च त्वां श्वो हन्तास्मीति भावः ।

(४) निहताशेषेत्यादिविशेषणेन परशुरामतुल्यत्वसूचनम् ।

(१) कुर्व्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारान्
अश्रून्मिश्रं कथञ्चित् ददतु जलममी बान्धवा बान्धवेभ्यः ।
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कै-
रस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥

उभौ । यदाज्ञापयत्यार्य्य इति निष्क्रान्तौ ।

नेपथ्ये । अरे रे गाण्डीवाकर्षणबाहुशालिन् अर्ज्जुन ! अर्ज्जुन ! क्वेदानीं गम्यते ।

(२) कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवतः शूरशून्ये रणेऽस्मिन् ।

---

(१) आप्ता बान्धवा देहभारान् देहसंघान् वह्निसात् कात्स्न्येन वह्निदेयान् कुर्व्वन्तु कात्स्न्येन देयेऽर्थे सातिप्रत्ययः । तस्य करोतेर्व्विधानेऽपि साधुत्वमिष्यते । अश्रून्मिश्रं रोदनजलमिलितं जलं ददतु । हतनरैर्गहने गहनतां दुर्गमतां प्राप्ते रणशिरसीत्यनुषङ्गः । रिपुभिर्दुर्य्योधनपक्षीयैः समं भास्वान् अस्तं प्रयातः प्रयातुमारब्धः तथा च राज्ञः शत्रवो यथा ऽस्तं नाशं गताः एवं रविरस्तमदर्शनम् गन्तुमारब्ध इत्यर्थः । अतो बलानि संह्रियन्ताम् नानास्थानस्थानि रणनिवारणपूर्व्वकमेकत्रीक्रियन्ताम् । इह शक्तिर्नाटकाङ्गं "शक्तिः पुनर्भवेत् विरोधस्य प्रशमन"मिति दर्पणोक्तेः ।

(२) एतान्यहानि व्याप्य कर्णक्रोधेन धनुस्त्यक्तमिदानीं तस्य भार्गेन पुनर्गृहीतमिति भावः । मया धनुषस्त्यागात् शूरशून्येऽस्मिन् वन इव रणे प्रौढं प्रगल्भमुत्कटमित्यर्थः । विक्रान्तं विक्रमः भावे क्तः । अनवजिता सेनाऽपराभूता न्यस्ता शोकेन परित्यक्ताऽऽसीदिति । अन्यत् येन तातस्य पितुरस्त्रमास्य कर्षं कृत्वा उत्तमाङ्गस्पर्शरूपापकारमनुचिन्त्य पाण्डवानां कल्पाग्निरिव द्रुपदतनूजानां प्रसरो नाशको द्रौणिः अश्वत्थामा अहं उपेतः प्राप्तः ।

स्पृष्टं स्पृष्ट्वोत्तमाङ्गे पितुरनवजितन्यस्तहेतेरुपेतः
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि॥

धृत। आकर्ण्य सहर्षम्। वत्स दुर्य्योधन! द्रोणपरिभवो-द्दीपितक्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपम-श्चायमश्वत्थामा प्राप्तः,तत्प्रत्युपगमनेन तावदयं सम्भाव्यतां वीरः।

गान्धा। जाद! पच्चुग्गच्छ एदं महाभाअं। (क)

दुर्यो। तात! अम्ब! किमनेन अङ्गराजवधाशंसिना वृथा-यौवनबलशस्त्रभरेण।

धृत। वत्स! न खल्वस्मिन् काले पराक्रमवतामेवं विधानां वचनमात्रेणैव विरागमुत्पादयितुमर्हसि।

प्रविश्याश्वत्थामा। विजयतां कौरवाधिपतिः।

दुर्यो। उत्थाय। गुरुपुत्र! इत आस्यताम्। इत्युपवेशयति।

अश्व। राजन्! दुर्य्योधन!

(१) कर्णेन कर्णसुभगं बहु यत्तदुक्त्वा
यत् सङ्गरेषु विहितं विदितं त्वया तत्।
द्रौणिस्त्वधिज्यधनुरापतितोऽभ्यमित्र

---

(१) कर्णेन कर्णसुभगं श्रुत्राव्यं न तु सफलमित्यर्थः। तदेव स्पष्टयति सङ्गरेषु युद्धेषु यत् कृतं तत्त्वयेव विदितं न कथनापेक्षेत्यर्थः। इदानीमभ्य-मित्रमभित्रं शत्रुमभिमुखीकृत्य अधिज्य आरूढ्ज्यामधिगतं धनुर्यस्य तादृशः सन् आपतितः आगतः अतः हे नृप! अप्रतिकारदुःखं शत्रुकृतापकारा-प्रतिकाररूपं दुःखं त्यज।

---

(क) जात! प्रत्युद्गच्छ एतं महाभागम्।

मैषोऽधुना त्यज नृपा प्रतिकारदुःखम् ॥

दुर्यो। साभ्यसूयम्। आचार्य्यपुत्र!

अवसाने ऽङ्गराजस्य योद्धव्यं भवता किल।
ममाप्यन्तं प्रतीक्षस्व कः कर्णः कः सुयोधनः (१)॥

अश्व। कथमद्यापि सएव कर्णपक्षपातः अस्मासु च परिभवः, राजन् कौरवेश्वर! एवं भवतु इति निष्क्रान्तः।

धृत। वत्स! क एष ते व्यामोहः, अस्मिन् काले एवंविधस्य अश्वत्थाम्नः वाक्पारुष्येण अप-(२)रागमुत्पादयसि?

दुर्यो। किमस्याप्रियमनृतं (३) मयोक्तं किं वा नेदं क्रोधस्थानम्? पश्य,

(४) अकलितमहिमानं क्षत्रियैरात्तचापैः
समरशिरसि युष्मद्भाग्यदोषाद्विपन्नम्।
परिवदति समक्षं मित्रमङ्गाधिराजं

---

(१) मत्युर्ध्वहृणे कर्णवधप्रतीक्षावत् ममापि वधः प्रतीक्ष्यतां कर्णस्य मम च एकत्वात् तदाह कः कर्णः कः सुयोधनः आवयोरभिन्नहृदयत्वादिति भावः।

(२) अपरागमसन्तोषम्।

(३) किं मया अनृतं मिथ्या अथ वाप्रियमुक्तं येनायं क्रुद्धः स्यात् किन्तु सत्यवचनेनैवायं क्रुद्ध इति भावः। इदं कर्णाधिक्षेपरूपं वचनं क्रोधस्थानं मम क्रोधावहं न अपि तु क्रोधावहमेव।

(४) क्षत्रियैः अकलितमहिमानं अविज्ञातमाहात्म्यं युष्मद्भाग्यदोषाद्विपन्नं विनष्टं मम मित्रमङ्गाधिराजं मम समक्षं परिवदति निन्दति अस्मिन् मित्रनिन्दकेऽर्ज्जुने वा तद्घातके मम को विशेषः को भेदवोध उभयोरपि मित्रद्वेष्टृत्वात्तुल्यत्वं अस्मिन् क्रोधस्थानत्वं युक्तमेवेति भावः।

मम खलु कथयास्मिन् को विशेषो ऽर्ज्जुने वा ॥

धृत । अथवा वत्स ! तवापि कोऽत्र दोषः, अवसानमिदानीं भरतकुलस्य, गान्धारि ! किमिदानीं करोमि मन्दभाग्यः । विचिन्त्य । भवत्वेवं तावत्, सञ्जय ! मद्वचनात् ब्रूहि भारद्वाजमश्वत्थामानम् ।

(१) स्मरति न भवान् पीतं स्तन्यं चिराय सहामुना
मम च मृदितं क्षौमं बाल्ये त्वदङ्गविवर्त्तनैः ।
अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च यत्
विकृतवचने माऽस्मिन् क्रोधश्चिरं क्रियतां त्वया ॥

सञ्ज । यदाज्ञापयति तातः । इत्युत्तिष्ठति ।

धृत । (२) अपि चेदमन्यत्त्वया वक्तव्यम् ।
यस्मोचितस्तव पिता वितथेन शस्त्रं
यत्तादृशः परिभवः स तथाविधोऽभूत् ।
एतद्विचिन्त्य बलमात्मनि पौरुषञ्च
दुर्य्योधनोक्तमपहाय विधास्यसीति ॥

---

(१) अमुना सुयोधनेन सह स्तन्यं गान्धारीस्तनभवं पयः पीतं बाल्ये त्वदङ्गविवर्त्तनैः तवाङ्गचालनैः मम क्षौमं वासः यत् मृदितम् एतच्च भवान् स्मरति अधुना अनुजशतवधस्फीतात् शोकात् कर्णे च अतिप्रणयात् विकृतवचनेऽस्मिन् दुर्य्योधने क्रोधश्चिरं न क्रियताम् यदिति पूर्ब्बार्द्धेऽन्वितम् ।

(२) तादृशः तादृशस्यात्यन्तमहिमार्णवस्य पितुः तथाविधः धृष्टद्युम्नकृतमौलिस्पर्शादिरूपः सः श्रूयमाणः परिभवस्तिरस्कारः एतद्विचिन्त्य अनुष्ठेय बलपौरुषाभावेऽसमर्थस्य चेष्टा न भवतीत्याशङ्क्य तदुभयमपि तवास्तीत्याह बलं देहजा शक्तिः पौरुषं उत्साहातिशयः । विधास्यसि प्रतिविधास्यसीत्यर्थः ।

सञ्ज । यदाज्ञापयति तातः । इति निष्क्रान्तः ।

दुर्यो । सूत ! सांग्रामिकं मे रथमुपकल्पय ।

सूत । यदाज्ञापयत्यायुष्मान् इति निष्क्रान्तः ।

धृत । गान्धारि ! इतो वयं मद्राधिपतेः शल्यस्य शिविरमेव (१)गच्छावः वत्स ! त्वमप्येवं कुरु, इति परिक्रम्य निष्क्रान्ताः सर्वे ।

## इति पञ्चमोऽङ्कः ।

---

(१) सैनापत्ये तस्य वरणाय तत्र गमनमिति बोध्यम् ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वेणीसंहार नाटकव्याख्याने दुर्य्योधननामपञ्चमाङ्कव्याख्या ।

# षष्ठोऽङ्कः ।

ततः प्रविशति आसनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च ।

युधि । विचिन्त्य निश्वस्य च ।

(१) तीर्णे भीष्ममहार्णवे कथमपि द्रोणानले निर्वृते

---

(१) भीष्मएव महार्णवस्तस्मिन् तीर्णे गतपारे सति द्रोणएवानलस्तस्मिन् कथमपि कौमार्गिम रूपेण निर्वृते स्वयमस्त्रत्यागेन शान्ते न तु जया-

कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसादल्पावशिष्टे जये।
सर्व्वे जीवितसंशयं वयममी वाचा समारोपिताः॥

द्रौप। सबाष्पम्। महाराअ! पञ्चालिए (१) त्ति किं ण भणिदं। (क)

युधि। कृष्णे! ननु मया (२) पुरुषमवलोक्य। बुधक!

---

दिना अतएव कथमपीत्युक्तम्। आश्यां दंष्ट्रायां विषं यत्र तादृशः भोगो देहो विद्यते यस्य विषयुक्तसर्प इत्यर्थः। भोगः सुखे "स्त्र्यादिभृतावहेश्च फणकाययो" रित्यमरः। कर्णएवा शीविषभोगी महासर्पस्तस्मिन् प्रशमिते विनाशिते सति जये स्वल्पावशिष्टे दुर्य्योधनमात्रजयापेक्षणात्। सहसा बलेन क्रियमाणं युद्धादिकं साहसं प्रियं साहसं यस्य तेन भीमेन वाचा "अद्यैव सुयोधनं हनिष्यामि अद्याहनने स्वयं मरिष्यामीत्येवंरूप" प्रतिज्ञावाक्येन वयं सर्वे संशयं विजयसंशयं मरणसम्भावनां वा समारोपिताः गमिताः तत्प्रतिज्ञाश्रवणेन अदर्शनं गतस्य दुर्य्योधनस्यादर्शने युद्धाभावेन भीममरणसम्भावनया वयमपि सर्वे तन्मरणेन मरिष्याम इति भावः। इह विरोधनं नाटकाङ्गं "कार्य्यात्ययोपगमनं विरोधनमिति स्मृतमिति दर्पणोक्तेः। महार्णव इत्यत्र महोदधाविति दर्पणसम्मतः पाठः।

(१) पाञ्चाल्या मया सर्वे संशयमारोपिता इति किं न भणितं भीमेन मद्गुरुभङ्गप्रतिज्ञाया मत्केशाम्बराकर्षणजातकोपेनैव कृतत्वात् मया वासकृदुत्तेजनात् ममैव तद्दोषभागित्वं न तु भीमस्येति द्रौपद्याशयः।

(२) प्रयोजकत्वेन द्रौपद्या आत्मनः कर्त्तृते प्रतिपादिते ततोऽपि प्रयोजकतया राज्ञा आत्मनएव सर्व्वानर्थहेतुभूतद्यूतकर्त्तृत्वेनात्मनः प्रयोजकत्वेन कर्त्तृत्वमुररीक्रियते ननु मयेति।

---

(क) महाराज! पाञ्चाल्येति किं न भणितम्।

युद्ध । देव ! आज्ञापय ।

युधि । उच्यतां सहदेवः, क्रुद्धस्य वृकोदरस्यापर्य्युषितदारुणां(१)प्रतिज्ञामुपलभ्य प्रनष्टस्य मानिनः कौरवराजस्य पदवीमन्वेष्टुमतिनिपुणमतयस्तेषु तेषु स्थानान्तरेषु यथार्थाभिज्ञाः सुसचिवाश्च भक्तिमन्तः पटुपटहरवव्यक्तघोषणाः (२) सुयोधनपदसञ्चारवेदिनः प्रतिश्रुतधनपूजाप्रत्युपक्रियाश्चरन्तु समन्तात् समन्तपञ्चकम् । अपि च ।

(३) पङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु दाशाः

---

(१) अपर्य्युषिता अपरदिनगामिनी 'अद्यैव हनिष्यामि अद्याहनने स्वयं मरिष्यामीत्येवंरूपा" अतएव दारुणा अद्याहनने स्वमरणफलकत्वात् प्रतिज्ञा तामुपलभ्य श्रुत्वा प्रनष्टस्य अदर्शनं गतस्य गुप्तस्येत्यर्थः ।

(२) पटुना पटहरवेण ढक्काशब्देन व्यक्तं यथा तथा घोषयन्ति इति घोषणाः नन्द्यादित्वात्ल्युः सर्व्वत्र प्रसिद्ध्यर्थं ढक्कामुच्चैर्वादयन्तः । "आनकः पटहोढक्के"त्यमरः ।

(३) ये चारा यत्र योग्यास्ते तत्र नियोज्या इत्युपदिशति । दाशाः कैवर्त्ताः "कैवर्त्ते दाशधीवरा" वित्यमरः । पङ्के पङ्किले जलादौ सैकते सिकतामयदेशे च नियोज्यास्तेषां जलप्रायदेशेष्वेव दक्षत्वात् । वल्लवा गोपाः कक्षेषु शुष्कतृणयुक्तस्थानेषु गोप्रचारणोपयोगितया तेषां तत्रैवाभिज्ञत्वात् क्षुण्णे विदलिते वीरुन्निचये लता संघे परिचयो येषां तथाभूताः कुञ्जेष्विति पाठे लतावेष्टितस्थानेष्वित्यर्थः । आक्रान्ते स्वयमाश्रयणरूपेण परिहृते वीरुन्निचये परिचयो येषामिति वाक्यार्थः । व्याधाः व्याघ्रप्रधानाटवीषु नियोज्या यान्तु रन्ध्रेषु । गर्त्तेषु सिद्धानां व्यञ्जनं लक्षणमिव व्यञ्जनं येषां ते सिद्धपुरुषचिह्नधारिणः प्रतिमुनिनिलयं सर्वमुनिस्थाने चरन्तु तद्रूपाणामेव तत्र प्रवेशौचित्यात् ।

[कुञ्जेष्वा] क्रान्तवीरुन्निचयपरिचया वल्लवाः सञ्चरन्तु ।
व्याधा व्याघ्राटवीषु स्वपरपदविदो ये च रन्ध्रेष्वभिज्ञा
ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च चाराश्चरन्तु ॥

पुरु । यदाज्ञापयति देवः ।

युधि । एवं वक्तव्यः सहदेवः ।

(१)ज्ञेया रहः शङ्कितमालपन्तः सुप्ता रुगार्त्ताश्च वने विचेयाः
त्रासो मृगाणां वयसां विरावो नृपाङ्कपादप्रतिमाश्च यत्र ॥

पुरु । यथाज्ञापयति देवः इति निष्क्रम्य पुनः प्रविश्य ।

सहदेव । देव, पाञ्चालकः प्राप्तः ।

युधि । त्वरितं प्रवेशय ।

पुरु । निष्क्रम्य पाञ्चालकेन सह प्रविश्य । एष देवः उपसर्पतु पाञ्चालकः ।

पाञ्चा । जयतु जयतु देवः, प्रियमावेदयामि महाराजाय देव्यै च ।

युधि । भद्र ! पाञ्चालक ! कच्चिदासादिता तस्य दुरात्मनः कौरवाधमस्य पदवी ?

---

(१) नियुक्तचराणामन्वेषणप्रकारमुपदिशति ज्ञेयाइति रहसि निर्जने शङ्कितं सशङ्कं यथा स्यात्तथा आलपन्तः जनाः अयं दुर्योधनो नवेति अनुसन्धेयाः रुगार्त्ताः रोगेण पीड़िताः सुप्ता जना अपि तथा बहुबुद्ध्यानुसन्धेयाः । एवं विचेयमुक्त्वाऽन्वेषणस्थानमाह त्रासइत्यादि नृपाणां अङ्काश्चिह्नानि पद्मादीनि यत्र तादृशस्य पादस्य प्रतिमाः प्रतिमूर्त्तयो यत्र तत्रान्वेष्टव्यइत्यर्थः ।

---

[ कच्चेषु त्रुसा ] क्वचित्पाठः ।

पाञ्चा । देव ! न केवलं पदवी, सोऽपि दुरात्मा देवीकेशाम्बराकर्षणमहापातकप्रधानहेतुरुपलब्धः ।

युधि । सहर्षं पाञ्चालकं परिष्वज्य । साधु भद्र ! प्रियमावेदितम्, अथ दर्शनगोचरं गतः ?

पाञ्चा । देव ! समरगोचरं पृच्छ ।

द्रौप । सभयम् । कहं समरगोअरो वट्टइ मे णाहो? । (क)

युधि । साशङ्कम् । सत्यं समरगोचरो मे वत्सः ?

पाञ्चा । सत्यं, किमन्यथा वक्ष्यते महाराजाय ।

युधि । (१) त्रस्तं विनापि विषयादुरुविक्रमस्य
चेतो विवेकपरिमन्थरतां प्रयाति ।
जानामि चोद्धतगदस्य वृकोदरस्य
सारं रणेषु [विजये] परिशङ्कितस्य ॥

द्रौपदीमवलोक्य मुखादस्रा बाष्पं नयति । अयि सुक्षत्रिये !
(२) गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः

---

(१) विषयात् त्रासहेतोर्विनापि त्रस्तं प्रकृत्या भीतं मे चेतो विवेकमन्थरतां भीमो जयी स्यात् नवेति निश्चयविषये मान्द्यं प्रयाति उरुविक्रमस्य महापराक्रमस्य भीमस्य रणेषु सारं बलं जानामि तथापि स्नेहभयादेव विजये परिशङ्कितः । भुजयोरिति पाठे भुजयोः सारमित्यन्वयः ।
(२) हे प्रिये ! द्वितयमपि वक्ष्यमाणमुभयमेव प्रायः बाहुल्येन तस्य परि-

---

(क) कथं समरगोचरो वर्त्तते मे नाथः ?

---

[ भुजयोः ] क्वचित् पाठः ।

पुराऽभूदस्माकं नृपसदसि योऽयं परिभवः ।
प्रिये ! प्रायस्तस्य द्वितयमपि पारं गमयतु
क्षयः प्राणानां वा कुरुपतिपशोस्तस्य निधनम् ।

अथवा कृतं सन्देहेन ।

(१) नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्याकर्षणे प्रभुः ॥

पाञ्चालक ! कथय कथय कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे किमधुना प्रवृत्तमिति ।

द्रौप । भद्द ! कहेहि कहेहि । (क)

पाञ्चा । शृणोतु देवो देवी च, अस्तीह (२) देवेन हते मद्राधिपतौ शल्ये गान्धारराजशलभकुले सहदेवानलं प्रविष्टे सेनापतिनिधननराक्रन्दविरलयोधोज्झितासु समरभूमिषु रिपुपराजयोद्धतचलितविचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्मत्सेनासु प्रनष्टेषु कृपकृतवर्माश्वत्थामसु तथा दारुणां प्रतिज्ञामुपलभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः ।

---

भवस्य पारमन्तं गमयतु आसंशायां लोट् । तदुद्वयमाह प्राणानां क्षयः तस्य वा निधनमेतदुभयमन्यतरं विना न तस्य परिभवस्य शान्तिरित्यर्थः ।

(१) ते तव केशपाशः । केशसमूहः "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे इत्यमरः । अद्य तेन बध्यते संयम्यते बन्ध बन्धने इत्यस्य रूपम् अस्य केशपाशस्याकर्षणे प्रभुः प्रयोजकः दुर्योधनश्च बध्यते वध हिंसायामित्यस्य रूपम् ।

(२) इह अस्मिन् विषये इदं वक्ष्यमाणवाक्यं तदर्थो वाऽस्तीत्यर्थः ।

---

(क) भद्र ! कथय कथय ।

युधि । ततस्ततः ।

द्रौप । अग्गदो कहेहि । (क)

पाञ्चा । अवधत्तां देवो देवी च । ततश्च भगवता वासुदेवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्ज्जुनौ समन्तात् समन्तपञ्चकं पर्य्यटितुमारब्धौ तमनासादितवन्तौ च । अनन्तरं दैवमनुशोचति मादृशे भृत्यवर्गे दीर्घमुष्णञ्च निश्वसति कुमारबीभत्सौ, जलधरसमयनिशासञ्चारितडित्प्रकरपिङ्गलैः कटाक्षैरादीपयति गदां वृकोदरे, मत्किञ्चनकारितामधिक्षिपति विधेर्भगवति नारायणे, कश्चित् संविदितः (१) कुमारस्य मारुतेरुज्झितमांसभारः प्रत्यग्रविशसित मृगलोहितचरणनिवसनस्त्वरमाणोऽन्तिकमुपेत्य पुरुषः परुषश्वासग्रस्ताक्षरश्रुतवर्णानुमेयपदया वाचा कथितवान्, देव कुमार ! अस्मिन् महतोऽस्य सरसस्तीरे द्वे पद्धती समवतीर्णपदप्रतिविम्बे (२) तयोरेका जलोत्तीर्णा न द्वितीया, परत्र कुमारः प्रमाणमिति ततः ससम्भ्रमं प्रस्थिताः सर्व्वे वयं तमेव पुरस्कृत्य गत्वा च सरस्तीरं परिज्ञाय सुयोधनपदलाञ्छितां पदवीमासाद्य भगवता वासुदेवेनोक्तं वृकोदर ! जानाति किल सुयोधनः सलिलस्तम्भनीं विद्यां, नूनं तेन तद्भयात् सरसीमेनामधिशयितेन भवितव्यम्, एतच्च वचनमुपश्रुत्य बलानुजस्य सकल-

---

(१) संविदितवृत्तान्तः संविदितं विद्यतेऽस्येति अर्शआदित्वादच् ।

(२) समवतीर्णं विन्यस्तं पदप्रतिबिम्बं पदप्रतिकृतिर्ययोस्तादृश्यौ ।

---

(क) अग्रतः कथय ।

दिक्प्रपूरितातिरिक्तमुद्भ्रान्तसकलसलिलचारिचक्रं त्रासोद्व-
तनक्रमालोड़ितं सरः सलिलं भैरवञ्च गर्ज्जित्वा कुमारवृकी-
दरेणाभिहितम्, अरे रे वृथाप्रख्यापितालीकपौरुषाभिमा-
निन् ! पञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन् !
धार्त्तराष्ट्रापसद ! ।

(१) जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणित [सुराक्षीवं रिपुं भाषसे ] ।
दर्पान्धो मधुकैटवद्विषि हरावप्युद्धतं चेष्टसे,
मत्त्रासात् नृपशो ! विहाय समरं पङ्केऽधुना लीयसे ॥
अपि च । भो मानान्ध ! कौरवाधम !
(२)पाञ्चाल्याः क्रोधवह्निः स्फुटमुपशमितप्राय एष प्रसह्य

---

(१) इन्दोश्चन्द्रस्य विमले कुले जन्म व्यपदिशसि । चन्द्रवंशे जातोऽहमित्येवं कथयसि ननु सहायाभावात् कथं योत्स्ये इत्याशङ्क्याह अद्यापि गदां धत्से गदासहायस्यान्यसहायापेक्षा नेति भावः । अथवा भ्रात्रादिवधेन निर्वेदे गदात्याग एवोचितः स च न कृत इत्यतोऽद्यापि युद्धश्रद्धास्तीति गम्यते इति भावः । मां दुःशासनस्य यत् कोष्णमीषदुष्णं प्रत्ययाहतत्वात् शोणितं तदेव मधु पाठान्तरे सुरा तेन क्षीबं नतं भाषसे मन्यसे वा मत्ततयावज्ञायसे इत्यर्थः । हे नृपशो ! नराधम ! मत्त्रासात् सञ्जाततः पङ्केऽधुना लीयसे । इह द्युतिर्नाटकाङ्गं तर्ज्जनोद्वेजने प्रोक्ता द्युतिरिति दर्पणोक्तेः ।

(२) मया प्रसह्य बलात् हतपतिषु कौरवाणामन्तः पुरेषु तद्वासिवामाजनेष्वित्यर्थः । प्रोन्मुक्तैः हतपतिकत्वात् निर्बन्धनैः केशपाशैः हेतु-

---

[ मधुक्षीवं रिपुं मन्यसे ] क्वचित् पाठः ।

प्रोन्मुक्तैः केशपाशैर्हतपतिषु मया कौरवान्तःपुरेषु ।
भ्रातु र्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात्किं भीमसेने विहितमसमये यत्त्वयाऽस्तोऽभिमानः॥

द्रौप । णाह ! अवणीदो मे मण्णु जइ पुणोवि सुलहं दंसणं भविस्सदि । (क)

युधि । कृष्णे ! नामङ्गलानि व्याहर्त्तुमर्हसि अस्मिन् काले ।
भद्र ! ततस्ततः ।

पाञ्चा । देव ! ततश्चैवं भाषमाणेन वृकोदरेण वीर्य्यक्रोधोद्धतभ्रमितभीषणगदापाणिना सहसैवोल्लङ्घिततीरमुत्सन्नलिनमाविद्धमूर्च्छितग्राहमुद्भ्रान्तसमस्तशकुन्तमतिभैरवं वेगभ्रमितवारिसञ्चयमायतमपि सरः समन्तादवलोड़ितम् ।

युधि । भद्र ! तथापि किं नोत्थितः ।

पाञ्चा । देव ! कथं नोत्थितः ?

(१) त्यक्तोत्थितः सरभसं सरसः स मूल
मुद्भ्रान्तकोपदहनोग्रविषस्फुलिङ्गः ।

---

भिः पाञ्चाल्याः क्रोधवह्निः उपशमितप्रायः । भ्रातुरुरसः रुधिरं पीयमानं निरीक्ष्य क्रोधात् भीमसेने मयि किं विहितं न किमपीत्यर्थः । असमये मया सह युद्धकरणस्येवायं समयः न तु पलायनस्य युद्धसमयेऽपि तदकृत्वा त्वया यत् यस्मात् अभिमानोऽहङ्कारः अस्तःत्यक्तः अतः न किमपि कर्त्तुं समर्थ इत्यर्थः ।

(१) स राजा सरसः सरोवरस्य मूलं समीपमाश्रयं सरभसं सवेगं

---

(क) नाथ ! अपनीतो मे मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति

आयस्तभीमभुजमन्दरवेल्लनाभिः
क्षीराम्बुधेः सुमथितादिव कालकूटः॥

युधि। साधु सुक्षत्रिय! साधु!

द्रौप। पड़िबस्रो समलो ण वा। (क)

पाञ्चा। उत्थाय चास्मात् सलिलाशयात् करयुगलोत्तम्भितोरणीकृतभीमगदः कथयति स्म, मारुते! किं भवतो भयेन प्रलीनं दुर्य्योधनं कथयसि? मूढ़! अनभिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुमध्यवसितवानस्मि पातालम्, एवं चोक्तं वासुदेवकिरीटिभ्यां द्वावप्यन्तः सलिलं निषिद्धसमर-[समारम्भौ] भीमसुयोधनौ। आसीनश्च कौरवराजः क्षितितले गदां निक्षिप्य निहतकुरुशतगजवाजिनरशतकलेवरसंमर्द्दसम्पतितगृध्रकङ्कजम्बुकमुत्सन्नसुयोधनबलमस्मद्वीरमुक्तसिंहनादसंबलितसमरतूर्य्यमबान्धवममित्रबान्धवं कौरवसंग्रामस्थानमवलोक्य आयतमुष्णञ्च निश्वसितवान्। ततश्च वृकोदरेणाभिहितम्, अयि भोः कौरवराज! कृतं बन्धुजनमन्युना मैवं विषादं कृथाः, पर्य्याप्ताः पाण्डवाः, सोऽहमसहाय इति,
किञ्च, (१) पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन!।

---

त्वक्का आयस्तौ आस्फोटितौ भीमभुजावेव मन्दरस्तेन वेल्लनाभिश्चालनाभिः सुमथितात् आलोडितात् क्षीराम्बुधेरिव बरसः कालकूटइव उत्थितः।

(१) दंशितस्य धृतवर्म्मणः आत्तशस्त्रस्य गृहीतायुधस्य ते तव संग्रामोऽस्तु।

---

(क) प्रतिपन्नं समरं न वा।

[ स्थलमुत्तारितौ ] क्वचित् पाठः।

[दंशितस्या]त्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः ॥

इत्यञ्च श्रुत्वा किञ्चिदश्रुपातान्वितां दृष्टिं कुमारयोर्निंक्षिप्योक्तवान् ।

कर्णदुःशासनबधात्तुल्यावेव युवां मम ।

अप्रियोऽपि प्रियो योद्धुं त्वमेकः प्रियसाहसः ॥

इत्युत्थाय परस्परक्रोधाक्षेपपरुषवाक्कलहप्रसारितघोरसंग्रामौ चित्रगदापरिघभासुरभुजभरौ मण्डलैर्विंहर्त्तुमारब्धौ भीमदुर्य्योधनौ। अहञ्च देवेन चक्रपाणिना देवसकाश मनुप्रेषितः। आह च देवो देवकीनन्दनः। अपर्य्युषितप्रतिज्ञे च मारुतौ प्रनष्टे कौरवराजे महानासीन्नो विषादः। सम्प्रति पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान्। अभ्युदयोचिताश्च प्रवर्त्त्यन्तामनवरतमङ्गलसमारम्भाः। कृतं सन्देहेन।

(१) पूर्य्यन्तां सलिलेन रत्नकलसा राज्याभिषेकाय ते,
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम् ।
रामे घोरकुठारभासुरकरे क्षत्रद्रुमच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥

द्रौप। सवाष्पम्। जं देवो त्तिहुअणणाहो आणवेदि तं कहं अण्णहा भविस्सदि। (क)

(१) क्षणसुलभम् इह प्ररोचना नाटकाङ्गम् "प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी" ति दर्पणोक्तेः।

(क) यत् देवस्त्रिभुवननाथ आज्ञापयति तत् कथमन्यथा भविष्यति ।

[ वर्म्मितस्य ] क्वचित् पाठः ।

पाञ्चा । न केवलमियमाशीः असुरनिसूदनस्यादेशोऽपि ।

युधि । कोहि नाम भगवतां सन्दिष्टं विकल्पयति, कः कोऽत्र भोः ?

प्रविश्य कञ्चुकी । आज्ञापयतु देवः ।

युधि । देवस्य देवकीनन्दनस्य बहुमानात् वत्सस्य विजयमङ्गलाशंसया प्रवर्त्त्यन्तां तदुचिताः समारम्भाः ।

कञ्चु । सोत्साहं परिक्रम्य । भो भोः संविधातॄणां पुरःसराः ! यथाप्रधानमन्तर्वेश्मनि दौवारिकाश्च ! एष खलु भुजबलपरिच्छेपोत्तीर्णकौरवपरिभवसागरस्य निर्व्यूढदुर्द्धरप्रतिज्ञाभारस्य सुयोधनानुजशतोद्धूननप्रभञ्जनस्य [ ] बलिनः प्राभञ्जनेर्दुःशासनोरःस्थलविदलननरसिंहस्य स्नेहपक्षपातिना मनसामङ्गलानि कर्त्तुमाज्ञापयति देवो युधिष्ठिरः ।

आकाशे । किं ब्रूथ ? सर्वतोऽधिकतरमपि प्रवृत्तं किं वा नालोकयसीति, साधु पुत्रकाः ! साधु. अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम् ।

युधि । आर्य्य जयन्धर !

कञ्चु । आज्ञापयतु देवः ।

युधि । गच्छ प्रियख्यापकं पाञ्चालकं पारितोषिकेण परितोषय ।

कञ्चु । यदाज्ञापयति देवः ।

इतिपाञ्चालकेन सह निष्क्रान्तः ।

---

[ दुर्य्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य वृकोदरस्य ] क्वचिदधिकः पाठः ।

द्रौप । महाराअ ! किं णिमित्तं उण णाह भीमसेणेण सो दुराआरो भणिदो पञ्चाणं वि अह्माणं जेण दे रोअदि तेण सह संगामो होदु त्ति, कहं णाम एदाणं मद्दीसुदाणं एकदरेण पत्थिदो तेण संगामो भवे तदो अच्चाहिदं भवे । (क)

युधि । कृष्णे ! एवं मन्यते जरासन्धघाती, हतसकलबन्धुवीरानुजराजन्यासु कृपकृतवर्म्माश्वत्थामशेषासु एकादशसु अक्षौहिणीषु अबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्त्तराष्ट्रः परित्यजेदायुधं, तपोवनं वा व्रजेत्, सन्धिं वा पितृमुखेन याचेत । एवं सति सुदूरमतिक्रान्तः प्रतिज्ञाभारो भवेत् सकलरिपुजयस्येति । समरं प्रतिपत्तुं पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षमः सुयोधनः । शङ्के चाहं गदायुद्धं वृकोदरस्यैवानेन । अयि सुक्षत्रिये ! पश्य ।

(१) क्रोधोद्गूर्णगदस्य नास्ति सदृशः सत्यं रणे मारुतेः
कौरव्ये कृतहस्तता पुनरियं देवे यथा सीरिणि ।
स्वस्त्यस्तूद्धतधार्त्तराष्ट्रनलिनीनागाय वत्साय मे

---

(१) क्रोधेन उद्गूर्णा उद्धृता गदा येन गुरो उद्यमने इत्यस्मात् कर्म्मणि क्तः । कृतहस्तता शीघ्रहस्तता शिक्षाकौशलमित्यर्थः उद्धत उत्कटः धार्त्तराष्ट्रएव नलिनी पद्मसंघातस्तस्य नाग इवाचरत् वत्साय स्वस्ति कुशलमस्तु ।

---

(क) महाराज ! किं निमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणितः पञ्चानामप्यस्माकं येन ते रोचते तेन सह संग्रामो भवत्विति । कथं नामैतयोः माद्रीसुतयोरेकतरेण प्रार्थितस्तेन संग्रामो भवेत् ततोऽत्याहितं भवेत् ।

शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम्॥

नेपथ्ये। भोस्तृषितोऽस्मि, सम्भावयतु कश्चित् सलिलच्छाया सम्प्रदानेन माम्।

युधि। आकर्ण्य। कः कोऽत्र भोः?

प्रविश्य कञ्चुकी। आज्ञापयतु देवः।

युधि। ज्ञायतां किमेतत्।

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रम्य पुनः प्रविश्य। देव! तृष्णावान् अतिथिरुपस्थितः।

युधि। शीघ्रं प्रवेशय।

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रान्तः।

ततः प्रविशति मुनिवेशधारी चार्वाको नाम राक्षसः।

राक्ष। आत्मगतम्। एषोऽस्मि सुयोधनस्य मित्रं पाण्डवान् वञ्चयितुं भ्रमामि। प्रकाशम्। तृषितोऽस्मि सम्भावयतु मां कश्चित् जलच्छायाप्रदानेन इति राज्ञः समीपमुपसर्पति।

सर्वे। उत्तिष्ठन्ति।

युधि। मुने! अभिवादये।

राक्ष। अकालोऽयं समुदाचारस्य जलप्रदानेन सम्भावयतु माम्।

युधि। मुने! उपविश्यतामासने।

राक्ष। उपविश्य। ननु भवतापि क्रियतामासनपरिग्रहः।

युधि। कः कोऽत्र भोः?

प्रविश्य गृहीतभृङ्गार कञ्चुकी। उपसृत्य। महाराज! शिशिरसुरभिसलिल संपूर्णोऽयं भृङ्गारः पानभाजनं चेदम्।

युधि। मुने! निवर्त्त्यतामुदन्याप्रतीकारः।

राच। पादौ प्रचाल्य उपस्पृशन्। भोः भोः! चत्रियस्त्वमिति मन्ये।

युधि। सम्यग् वेत्ति भवान्, चत्रिय एवाऽस्मि।

राच। प्रतिदिनसुलभस्वजनविनाशनेषु संग्रामेषु युष्मत्तो नादेयं सलिलादिकम्। भवतु छाययैवानया सरस्वतोशिशिरतरङ्गस्पृशा मरुतानेन विगतक्लमी भविष्यामि।

द्रौप। बुद्धिमदिए! बीएहि महेसिं तालविन्तेण। (क)

चेटी। तथा करोति।

राच। भवति! अनुचितोऽयमस्मासु समुदाचारः।

युधि। मुने! कथं पुनरेवं भवान् परिश्रान्तः।

राच। मुनिजनसुलभेन कौतूहलेन तत्र भवतां महाचत्रियाणां द्वन्द्वयुद्धमवलोकयितुं पर्यटामि समन्तपञ्चकम्, अद्य तु बलवत्तया शरदातपस्य अपर्य्याप्तमेवावलोक्य गदायुद्धमर्ज्जुनसुयोधनयोरागतोऽस्मि।

कञ्चु। मुने! न खल्वेवं भीमसुयोधनयोरिति कथय।

राच। आः! अविदितवृत्तान्त एव कथं मामाचिपसि।

युधि। महर्षे! कथय।

राच। चणमात्रं विश्रम्य सर्वं कथयामि भवतो न पुनरस्य वृद्धस्य।

युधि। कथय किमर्ज्जुनसुयोधनयोरिति।

राच। पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमर्ज्जुनसुयो-

---

(क) बुद्धिमतिके! वीजयैनं महर्षिं तालवृन्तेन (व्यजनेन)।

अनयोरिति ।

युधि । न भीमसुयोधनयोरिति ।

राच । वृत्तं तत् ।

युधिष्ठिरो द्रौपदी च मोहमुपपतौ ।

कञ्चुकी सलिलमासिच्य । समाश्वसितु देवो देवी च ।

चेटी । समस्ससिदु समस्ससिदु देवी । (क)

उभौ । संज्ञां लभते ।

युधि । किं कथयसि मुने ! वृत्तं भीमसुयोधनयोर्गदा-युद्धमिति ।

द्रौप । भअवं ! कहेहि वुत्तं त्ति । (ख)

राच । कञ्चुकिन् ! कौ पुनरेतौ ।

कञ्चु । ब्रह्मन् ! एष देवो युधिष्ठिरः एषा पञ्चालराजतनया

राच । आः ! दारुणमुपक्रान्तं मया नृशंसेन ।

द्रौप । हा णाह ! भीम ! । इति मोहमुपगता । (ग)

कञ्चु । किं नाम कथितम् ।

चेटी । समस्ससिदु समस्ससिदु देवी । (घ)

युधि । खाश्वम् । ब्रह्मन् !

(१) पदे सन्दिग्ध एवास्मिन् दुःखमास्ते युधिष्ठिरः ।

---

(१) सन्दिग्धे संशयितेऽस्मिन् पदे विषये भीमोजीवति नवेत्येवं रूपे

---

(क) समाश्वसितु समाश्वसितु देवी ।

(ख) भगवन् ! कथय किं वृत्तमिति ।

(ग) हा नाथ ! भीम !

(घ) समाश्वसितु समाश्वसितु देवी ।

वत्सस्य निश्चिते तत्त्वे प्राणत्यागादहं सुखी ॥

राच । सानन्दमात्मगतम् । अयं मे यत्नः । प्रकाशम् । यद्येवम-वश्यकथनीयं संक्षेपेण कथयामि, न युक्तं बन्धुव्यसनं विस्तरे-णावेदयितुम् ।

युधि । सास्रू णि सस्वनम् ।

सर्व्वथा कथय ब्रह्मन् ! संक्षेपाद्विस्तरेण वा ।
वत्सस्य किमपि श्रोतुमेष दत्तः क्षणो मया ॥

राच । श्रूयताम् ।

तस्मिन् कौरवभीमयो र्गुरुगदाघोरध्वनौ संयुगे,

द्रौप । सहसोत्थाय । तदो तदो । (क)

राच । स्वगतम् । कथं पुनरनयोर्लब्धसंज्ञतामपनयामि । प्रकाशम् ।

(१) सीरी सत्वरमागत श्चिरमभूत्तस्याग्रतः सङ्गरः ।
आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृतिं दुःशासनारी गतः ॥

---

युधिष्ठिरः दुःखमास्ते वत्सस्य भीमस्य तत्त्वे जीवनाभावे निश्चिते सति अहं प्राणत्यागात् सुखी तन्मरणदुःखात् मरणं श्रेयस्करं मन्यमानः मरिष्यामीत्यर्थः ।

(१) सीरी बलरामस्तीर्थयात्राप्रक्रमात् । तत्प्रसङ्गेन कुरुक्षेत्रे तद्दि-वसे आगत इति गदापर्व्वस्थिता कथात्रानुसन्धेया हलिना बलरामेण प्रियशिष्यतामालम्ब्य कौरवे संज्ञा सङ्केतविशेषः शक्तिरितिपाठे शक्तिः-कौशलरूपा आहिता यां शक्तिमासाद्य कुरुसत्तमः दुःशासनारौ भीमे प्रतिकृतिं प्रतीकारं गतः भ्रातृमरणजन्य दुःखप्रतिकाररूपं तद्धननं कृतवानित्यर्थः ।

---

(क) ततस्ततः ।

युधि । हा वत्स ! वृकोदर ! इति मोहमुपगतः ।

द्रौप । हा णाह ! भीमसेण ! हा मह ! परिभवपड़िआर-परिचत्तजीविअ ! जड़ासुरबअहिड़िम्बकिम्मीरकीचअजरास-न्धणिसूदण ! सोअन्धिआहरणचाडुआर देहि मे पड़िवअणं । इति मोहमुपगता । (क)

कञ्चु । सास्रम् । हा कुमार भीमसेन ! धार्त्तराष्ट्रकुलक-मलिनीप्रालेयवर्ष ! महाराज ! समाश्वसिहि समाश्वसिहि, भद्रे ! समाश्वासय तत्रभवतीम्, महर्षे ! त्वमपि आश्वासय महाराजम् ।

राच । स्वगतम् । आश्वासयामि प्राणांस्त्याजयितुम् । प्रका-शम् । अयि भोः भीमाग्रज ! क्षणमेकमाधीयतामाश्वासः कथा-शेषोऽप्यस्ति ।

युधि । समाश्वस्य । महर्षे ! किमस्ति कथाशेषः ।

राच । ततश्च हते तस्मिन् सुक्षत्रिये वीरसुलभां गतिमुप-गते समग्रसङ्कलितं भ्रातृवधशोकजं बाष्पमुत्सृज्य भ्रातृवध-शोकात् अपहाय गाण्डीवं प्रत्यग्रक्षतजच्छटाचर्च्चितां तामेव गदां भ्रातृहस्तात् यत्नादाकृष्य निवार्य्यमाणः सन्वित्सुना वा-सुदेवेन, आगच्छागच्छेति सोपहासं भ्रमितगदाभङ्कारमू-र्च्छित गम्भीरवचनध्वनिना आहूयमानः कौरवराजेन तृती-योऽनुजस्ते किरीटी योद्धुमारब्धः । तथा कृतिनस्तस्य गदा-

(क) हा नाथ भीमसेन ! हा ! मम परिभवप्रतीकारपरित्यक्तजीवित ! जटासुरबकहिड़िम्बकिर्म्मीरकीचकजरासन्धनिसूदन ! सौगन्धिकाहरणचा-टुकार ! देहि मे प्रतिवचनम् ।

घातान्निधनमुत्प्रेक्षमाणेन कामपालेन अर्ज्जुनपक्षपाती देवकीसूनुःप्रयत्नात् स्वरथमारोप्य द्वारकां नीतः।

युधि। साधु भो अर्ज्जुन! तदैव प्रतिपन्ना वृकोदरपदवी गाण्डीवं परित्यजता, अहं पुनः केनोपायेन प्राणापगमनमहोत्सवमुत्सहिष्ये।

द्रौप। हा णाह! भादुवच्छल! ण जुत्तं भादरं असिक्खिदं गदाए अत्तणोसुहं गच्छन्तं उवेक्खिदुं। (क) इति मोहमुपगता।

राज्ञ। तन्नखाहम्।

युधि। भवन्तु मुने! किमतःपरं श्रुतेन। हा तात! भीमसेन! जतुग्टहसमुद्गतरणयानपोत! हा किर्मीरहिड़िम्बासुरजरासन्धजयमल्ल! हा कीचकसुयोधनानुजकमलिनीकुञ्जर! हा द्यूतपणप्रणयिन्! मम शरीरस्थितिपरिखेदशङ्कासूदन! हा मदाज्ञासम्पादक! हा कौरववनदावानल!

निर्लज्जस्य दुरोदरव्यसनिनो वत्स! त्वया सीदता
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता।
किं नामापकृतं मया तदधिकं त्वय्यद्य निर्वत्सलं
त्यक्त्वाऽनाथमबान्धवं सपदि मां येनासि दूरं गतः॥

द्रौप। उत्थाय। महाराअ! किं एदं वट्टइ। (ख)

युधि। कृष्णे! किमन्यत्।

स कीचकनिसूदनो वकहिड़िम्बकिर्मीरहा

---

(क) हा नाथ! भ्रातृवत्सल! न युक्तं भ्रातरम् अशिक्षितं गदायां अत्मोर्द्धं गच्छन्तम् उपेक्षितुम्।

(ख) महाराज! किमेतद्वर्त्तते।

मदान्धमगधाधिपद्विरदसन्धिभेदाशनिः ।
गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्ज्जुनगुरुर्गतोऽस्तं किल ॥

द्रौप । आकाशे दत्तदृष्टिः । णाह ! भीमसेण ! तुए किल मे केसा संजमिदव्वा, ण जुत्तं वीरस्स खत्तिअस्स पड़िसादं सिढिलेदुं, ता पड़िवालेहि मं जाव उवसप्पामि । (क) इति पुनर्मोहमुपगता ।

युधि । आकाशे दत्तदृष्टिः । अम्ब पृथे ! श्रुतोऽयं तव पुत्रस्य समुदाचरः, मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः । तात ! जरासन्धशत्रो ! किं नाम वैपरीत्यमेतावता कालेन अल्पायुषि[ ]समालोकितं जनेन । अथवा मयैव बहूपलब्धम् ।

(१) दत्त्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे ।

---

(१) करदीकृता अखिला नृपा यस्यां तथाविधां मेदिनीं मे मह्यं दत्त्वा समर्प्य यत् लज्जसे लज्जितवानसि भूतसामीप्ये लट् । एवमुत्तरत्र । द्यूते मया पणीकृतोऽपि ग्लहत्वेन कल्पितोऽपि यत्र क्रुध्यसि क्रुद्धवान् किन्तु प्रीयसे प्रीतोऽसि । यच्च सूदतां पाचकत्वं प्राप्तोऽसि तानि स्तुतानि एतानि पूर्व्वोक्तानि कर्म्माणि सहसा विनश्वरस्य तव चिह्नानि लिङ्गानि दृष्टानि मरिष्यतो विनयादिगुणाधिक्यं भवतीति लोकप्रसिद्धिः तथाच एतानि कार्य्याणि तवाचिरमरणानुमापकानीति भावः ।

---

(क) नाथ ! भीमसेन ! त्वया किल मे केशाः संयमयितव्याः, न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुं, तत् प्रतिपालय मां यावदुपसर्पामि ।

[ त्वयि ] अधिकः पाठः ।

स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत् सूदतां
तान्येतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥

मुने ! किं कथयसि तस्मिन् कौरवभीमयोः इति पठति ।

राज । एवमेतत् ।

युधि । धिङ्मम भाग्यानि । आकाशमवलोकयन् । भगवन् ! कामपाल ! कृष्णाग्रज ! [ ]

(१) ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्म्मो
रूढ़ं सख्यं तदपि गणितं नानुजस्यानुजे मे ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम् ॥

द्रौपदीमुपगम्य । अयि पाञ्चालि ! उत्तिष्ठ उत्तिष्ठ समानदुःखावेव आवां भवावः, मूर्च्छया किं मामेवमभिसन्धत्से ।

---

(१) ज्ञातिः सपिण्डः पितृष्वस्रेयतया समानदेहावयवत्वेन भीमादेस्तत्सपिण्डत्वम् । तस्मिन् या प्रीतिरनुरागः सा न गणिता नादृता त्वयेतिशेषः क्षात्रधर्म्मोऽपि न गणितः युद्धद्रष्टृभिरपक्षपातिभिर्भवितव्यमिति हि क्षात्रधर्म्मः । तवानुजस्य वासुदेवस्य ममानुजेऽर्ज्जुने चिरं बहुकालं व्याप्य सख्यं मैत्री यत् रूढ़ं तदपि न गणितं तदादरे हि तद्भ्रातृनाशनमनुचितमिति भावः । भवतः शिष्ययोः गदायुद्धेऽन्तेवासिनोः भीमसुयोधनयोस्तुल्य एव स्नेहबन्धः काममित्यवधारणे । स्नेहतुल्यत्वेऽपि एकस्य साहाय्यकरणमनुचितमिति भावः । इह द्रवो नाटकाङ्गं "द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवेति" दर्पणोक्तेः ।

[ सुभद्राभ्रातः ] दर्पणधृतः अधिकः पाठः ।

द्रौप । लब्धसंज्ञा । बन्धेदु णाहो ! दुज्जोहणरुधिलाद्देण ह-त्थेण दुःसासणमोइदं मे केसहत्थं । हञ्जे बुद्धिमदिए ! तव पच्चक्खं एव्व णाहेण पड़िस्सादं । कञ्चुकिनमुपेत्य । सन्दिट्टं दाव मे देवकीणन्दणेण केसरअणा आरम्भीअदु त्ति ता उवणेहि मे फुल्लदामाइं, बिरएहि दाव कबरीं, करेहि भअवदो पुरिसोत्त-मस्स वअणं, णहि अलीअं मन्देदि सो, अहवा किं मए अदि संतत्ताए भणिदं अदूरगदं अज्जउत्तं अणुगमिस्सं । युधिष्ठिर-मुपगम्य । महाराअ ! आदीवअ मे चिदां, तुमं वि खत्तधम्मं अ-णुवट्टन्तो एव्व णाहस्स जीविदहरस्स अहिमुहो होहि । (क)

युधि । युक्तमाह पाञ्चाली । कञ्चुकिन् ! क्रियतामियं त-पस्विनी चितासंविभागेन सद्यवेदना, ममापि सज्जं धनुरुप-नय अलमथवा धनुषा ।

तस्यैव देहरुधिरोचितपाटलाङ्गी
मादाय संयति गदामपविद्धचापः ।
भ्रातृप्रियेण कृतमद्य यदर्ज्जुनेन
श्रेयो ममापि हि तदेव कृतं जयेन ॥

राज । राजन् ! रिपुजयविमुखं ते यदि चेतः, तदा यत्र

---

(क) बध्नातु नाथो दुर्य्योधनरुधिरार्द्रेण हस्तेन दुःशासनमोचितं मे केशहस्तम् । हञ्जे बुद्धिमतिके ! तव प्रत्यक्षमेव नाथेन प्रतिज्ञातम् । सन्दि-ष्टं तावन्मे देवकीनन्दनेन केशरचना आरभ्यतामिति तदुपनय मे फुल्लदामानि, विरचय तावत् कबरीम्, कुरुष्व भगवतः पुरुषोत्तमस्य वच-नम्, नह्यलीकं मन्त्रयते सः । अथवा किं मया अतिसन्तप्तया भणि-तमदूरगतमार्य्यपुत्रमनुगमिष्यामि । महाराज ! आदीपय मे चितां, त्वमपि क्षत्रधर्म्ममनुवर्त्तमान एव नाथस्य जीवितहरस्याभिमुखो भव ।

तत्र वा प्राणत्यागं कुरु, वृथा तत्र गमनम् ।

कञ्चु । सरोषम् । धिङ् मुनिजनासदृशं राक्षसस्य सदृशं भवता व्याहृतम् ।

राक्ष । स्वगतम् । किं ज्ञातोऽहमनेन । प्रकाशम् । भोः कञ्चुकिन् ! एतद्ब्रवीमि । तयोर्गदया खलु युद्धं प्रवृत्तमर्ज्जुनदुर्य्योधनयोः । जानामि तयोर्गदाया भुजसारं, दुःखितस्य राजर्षेरपरमनिष्टश्रवणं परिहरन् एवं ब्रवीमि ।

युधि । बाष्पं विसृजन् । साधु महर्षे साधु ! सुस्निग्धमभिहितम् ।

कञ्चु । महाराज ! किं नाम शोकान्धतया देवकल्पेनापि देवेन त्वया प्राकृतेनेव त्यज्यते क्षत्रधर्म्मः ।

युधि । आर्य्य जयन्धर !

शुश्राम्यामि नो परिघपीवरबाहुदण्डौ
वित्तेशशक्रवरुणाधिकवीर्य्यवन्तौ ।
भीमार्ज्जुनौ क्षितितले प्रविचेष्टमानौ
द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम् ।

अयि पाञ्चालराजतनये ! मद्दुर्नयप्राप्तशोच्यदशे ! यथा संदीप्यते पावकस्तथा सहितावेव बन्धुजनं सम्भावयावः ।

द्रौप । अज्ज ! करेहि दारुसञ्चअं, कहं ण कोवि महाराअस्स वअणं करेदि, हा णाह ! अज्ज तुए विणा महाराओ परिअणेण वि परिहवीअदि ।(क)

(क) आर्य्य ! कुरु दारुसञ्चयम्, कथं न कोऽपि महाराजस्य वचनं करोति, हा नाथ ! अद्य त्वया विना महाराजः परिजनेनापि परिभूयते ।

राज। सदृशमिदं भरतकुलबधूनां पत्यनुमरणम्।

युधि। महर्षे! न कश्चित् शृणोति तावदावयोर्वचनं तदिन्धनप्रदानेन प्रसादः क्रियताम्।

राज। मुनिजनविरुद्धमिदम्। स्वगतम्। पूर्णा मे मनोरथाः यावदनुपलक्षितः समीपेऽहमिन्धनमादीपयामि। प्रकाशम्। राजन्! न शक्नुमो वयमवस्थातुमिति। निष्क्रान्तः।

युधि। कृष्णे! न कश्चिदस्मद्वचनं करोति, भवतु स्वयमेवाहं दारुसञ्चयं कृत्वा चितामादीपयामि।

द्रौप। तुवरदु तुवरदु महाराओ। नेपथ्ये। कलकलः।

द्रौप। सभयमाकर्ण्य महाराअ! कस्स वि एसो तेजोबलदप्पिदस्स णिग्घोसो सुणीअदि अवरं वि अप्पिअं सुणिदुं अत्थि णिब्बन्धो तदा बिलम्बीअदि। (क)

युधि। न खलु बिलम्ब्यते उत्तिष्ठ। इतिसर्वे परिक्रमन्ति।

युधि। अयि पाञ्चालि! अम्बायाः सपत्नीजनस्य च किञ्चित् सन्दिश्य निवार्य्यतां परिजनः।

द्रौप। महाराअ! अम्बाए एव्वं सन्दिसिस्सं जो सो बअहिड़िम्बकिम्मीरजरासन्धजअमल्लो बि ते मज्झमपुत्तो मम हदासाए पक्खबादेण परलोअं गदो त्ति (ख)

---

(क) महाराज! कस्यापि एष तेजोबलदर्पितस्य निर्घोषः श्रूयते अपरमप्यप्रियं श्रोतुमस्ति निर्बन्धस्ततो विलम्ब्यते।

(ख) महाराज! अम्बायै एवं संदेक्ष्यामि यः स वकहिड़िम्बकिर्मीरजरासन्धजयमल्लोऽपि ते मध्यमपुत्रो मम हताशायाः पक्षपातेन परलोकं गत इति।

युधि । भद्रे ! बुद्धिमतिके ! उच्यतामस्मद्वचनादम्बा ।

येनासि तत्र जतुवेश्मनि दीप्यमाने
निर्व्वासिता सह सुतैर्भुजयोर्बलेन ।
तस्य प्रियस्य बलिनस्तनयस्य पापं
कोऽन्यस्तवाम्ब ! कथयेत् कथमीदृशस्य ॥

आर्य्य जयन्धर ! त्वमपि सहदेवसकाशं गच्छ, (१)वक्तव्यश्च तत्र भवान् पाण्डुकुलवृहस्पतिर्वैमात्रेयः सकलकुरुकुलकमलाकरवाड़वानलो युधिष्ठिरः परलोकमभिप्रस्थितः प्रियमनुजमनुकूलं सततमाशंसनीयम् असम्मूढं व्यसनेऽभ्युदये च धृतिमन्तं भवन्तमचिरमालिङ्गा शिरसि चाघ्रायेदं प्रार्थयते ।

(२) मम हि वयसा दूरेण त्वं श्रुतेन समो भवान्

---

(१) तत्रेत्यादि रचणीयं शरीरमितिपद्यान्तं वचनं वक्तव्यइत्यर्थः । पाण्डुकुले वृहस्पतिरूपः प्रशस्तबुद्धिमत्त्वात् अतएव प्रशस्तबुद्धिशालितया प्रशंसनीयत्वात् तत्रभवानिति विशेषणम् । कुरुकुलमेव कमलानां जलानामाकरः समुद्रस्तत्र वाड़वानलरूपः अनिवार्य्यत्वात् । दावानलइति पाठे कमलानामाकरः सभूहस्तत्र दावानलरूपः अनायासेन दाहादिमेव नाशकत्वात् । परलोकमभिप्रस्थितः प्रस्थातुमारब्धः उक्तविशेषणविशिष्टं भवन्तमालिङ्गा प्रणयेन शिरसि चाघ्राय चेदं प्रार्थयते ।

(२) प्रार्थनीयमाह मम वयसा दूरेण हीन इत्यर्थः । भवान् श्रुतेन ज्ञानेन मम समस्तुल्यः । ज्ञातसहजया बुद्धा सहजबुद्धा भ्रातृबुद्धेरित्यर्थः । अहं ज्येष्ठस्त्वं पुनः मनीषितया बुद्धिमत्त्वेन गुरुर्मभाधिकः मान्यश्च । अतः कारणात् त्वयि गुरुत्वादित्यर्थः । शिरसि अञ्जलिं बद्धा अहमभ्यर्थये पितुर्व्वारिदो भव अस्माकं सर्व्वेषां मरणात् अन्यतर्पणकारकविरहेण तर्पणाभावो मा भूदिति तयाच त्वयाऽकृत्पदवी नानुगन्तव्येत्यर्थः ।

कृतसहजया बुद्ध्या ज्येष्ठो मनीषितया गुरुः ।
शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये,
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥

अपिच, बाल्ये संवर्द्धितस्य नित्यमभिमानिनोऽश्मसदृश-हृदयसारस्यापि नकुलस्य ममाज्ञया वचने स्थातव्यं नानुगन्तव्याऽस्मत्पदवी त्वयाहि वत्स !

(१) विस्मृत्यास्मान् श्रुतिविशदया स्वाग्रजौ चात्मबुद्ध्या
क्षोणी पाण्डावुदकपृषतानश्रुगर्भान् प्रदातुम् ।
दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥

गच्छ जयन्धर ! अस्मच्छरीरस्पृष्टिकया (२) शापितेन भवताऽकालहीनमिदमवश्य मावेदनीयम् ।

---

(१) श्रुतिविशदया शास्त्रज्ञानेन निर्म्मलया आत्मबुद्ध्या स्वधिया विवेकधियेत्यर्थः । अस्मान् माम् अस्मदएकत्वेऽपि विभाषयया बहुत्वानुशासनात् । स्वाग्रजौ भीमार्जुनौ च विस्मृत्य शोकविमोचनेनाननुचिन्त्येत्यर्थः । पाण्डौ क्षोणे अस्मत्क्षयेण तद्वंशक्षयात् क्षीणतां प्राप्ते सतीत्यर्थः । अश्रुगर्भान् चक्षुर्जक सहितान् उदकपृषतान् जलविन्दून् प्रदातुं दायादानां भवने यादवानां यदुवंश्य क्षत्रियाणां वा कुले तत्समीपे इत्यर्थः । अत्यन्तनिर्वेदे कान्तारे दुर्गमवने वा कृतवसतिना कृतावासेन भवता शरीरं रक्षणीयं न तु अस्माभिरिव त्याज्यमित्यर्थः ।

(२) स्पृष्टिका स्पर्शः भावे क्तिन् ततः स्वार्थे कः शरीरस्य स्पृष्टिकया देहस्पर्शेन शापितेन दत्तशपथेनेत्यर्थः । अकालहीनम् उचितकालेन न हीनम् अश्राद्धभोजीत्यादिवत् असमर्थसमासः । अस्मन्मरणश्रवणे तेनाप्यनुमरणं यथा न विधेयं तथा ततः प्रागेवावेदनीयमिति भावः ।

द्रौप। हला बुद्धिमदिए! भणाहि मह वअणेण पिअसहीं सुभद्दां वच्छाए उत्तराए चउट्ठो मासो पड़िवस्सस्स गब्भस्स, तुमं एव्व कुलपड़िट्ठावअं सावहाणं रक्ख त्ति। कदावि इदो लोअगदस्स ससुरकुलस्स अह्माणं अ सलिलबिन्दूदो भविस्सदि त्ति। (क)

युधि। सास्रम्। भोः! कष्टम्।

(१) शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूलपर्य्यङ्कबन्धे।
दग्धे दैवात् सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मिन्
आशाबन्धं कमपि कुरुते छायया ऽर्थी जनोऽयम्॥

कञ्चुकिनमवलोक्य। जयन्धर! अस्मच्छरीरेण शापितोऽसि तथापि न गम्यते।

---

(१) शाखारोधेन शाखावरणेन सहप्राप्तेरित्यर्थः। स्थगितमाच्छादितं वसुधामण्डलं यस्य, मण्डिता भूषिता आशा दिशो येन, सुसदृशः स्वरूपानुरूपः महामूलस्य पर्य्यङ्कबन्धः परितोऽङ्कबन्ध आलवालरूपो यस्य ईदृशे तरौ पाण्डुवंशरूपवृक्षे दैवात् भाग्यवशात् दग्धे सति छायया अनातपेन दुःखाभावेनेत्यर्थः। अर्थी अभिलाषी अयं माहशः द्रौपदीरूपो जनो वा अस्मिन् उत्तरागर्भरूपे सूक्ष्माङ्कुरे कमपि आशाबन्धं कुरुते प्रनष्टसर्वसम्पत्तिकस्य वृक्षस्याङ्कुरमात्रे आशालम्बनमतीवानित्यफलकमिति भावः।

---

(क) हला बुद्धिमतिके! भण मम वचनेन प्रियसखीं सुभद्राम्, वत्साया उत्तरायाश्चतुर्थो मासः प्रतिपन्नस्य गर्भस्य, त्वमेव कुलप्रतिष्ठापकं सावधानं रक्षेति। कदापीतो लोकाङ्गतस्य श्वशुरकुलस्यास्माकञ्च सलिलबिन्दुदो भविष्यति।

कञ्चु । साक्रन्दम् । हा देव पाण्डो ! तव सुतानामजातश-त्रुभीमार्ज्जुननकुलसहदेवानामयं दारुणः परिणामः । हा देवि कुन्ति ! भोजराजभवनपताके !

(१) भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन
स्तस्यैवाखिलधार्त्तराष्ट्रनलिनव्यालोलने दन्तिनः ।
आचार्य्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा
दग्धं तत् सुतकाननं तव मही यस्याश्रयाच्छीतला ॥ इति

रुदन्निष्क्रान्तः ।

युधि । जयन्धर ! जयन्धर !

प्रविश्य कञ्चुकी । आज्ञापयतु देवः ।

युधि । वक्तुमिच्छामि पुनरेतावन्ति भागधेयानि युष्माकं. यदि कदाचिद्विजयी स्याद्वत्सोऽर्ज्जुनस्तद्वक्तव्योऽस्मद्वचनाद्भवता ।

(२) हली हेतुः सत्यं भवति मम वत्सस्य निधने

---

(१) ते तव भ्रातुस्तनयेन शौरेः कृष्णस्य गुरुणाऽग्रजेन गाण्डीविनोऽर्जुनस्य श्यालेन तस्य सुभद्रापतितया तद्भ्रातेत्यर्थः । अखिला धार्त्तराष्ट्रा एव नलिनानि सुखच्छेद्यत्वात् तेषां व्यालोलने उन्मूलने दन्तिनः हस्तिरूपस्य तस्यैव वृकोदरस्यैवाचार्य्येण गुरुणा हलिना तत् तव सुतकाननं भीमनाशनेनैव सर्व्वेषामपि नाशनादित्यर्थः । दग्धं यस्याश्रयान्मही शीतला । एवं जन्मादि संबन्धिनामप्येषां तेन हननमत्यन्तानुचितमेवेति ध्वनयन् विशिनष्टि मत्तेन मद्यादिना क्षीवेण उन्मत्तेन स्वाभाविकोन्मादरोगवता तथाच मत्तोन्मत्तयोर्न्न कृत्याकृत्यविवेकइति भावः ।

(२) सहजसुहृदः स्वाभाविकबान्धवस्य "आत्मपितुः स्वसुः पुत्रा आत्ममातुः स्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया ह्यात्मबान्धवा" इति स्मृत्युक्तेः । तथा च पितुःष्वस्रेयादीनां सहजमित्रत्वेऽपि कृष्णस्येव बल-

तथाप्येष भ्राता सहजसुहृदस्ते मधुरिपोः ।
अतः क्रोधः कार्य्यो न खलु मयि च प्रेम भवता
वनं गच्छेर्मागाः पुनरकरुणां चात्रपदवीम् ॥

कञ्चु । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

युधि । अग्निं दृष्ट्वा सहर्षम् । ननूद्धतशिखाहस्ताहूतास्मद्विध-व्यसनिजन (१) समिद्धो भगवान् हुताशनस्तत्रेन्धनमात्मानं करिष्ये ।

द्रौप । पसीददु महाराओ मम इमिणा अपच्छिमेण पणएण, अहं एव्व अग्गदो गमिस्सं । (क)

युधि । यद्येवं सहिताविवाभ्युदयमपि भोक्ष्यावहे ।

चेटी । हा भगवन्तो लोअवाला ! परित्तात्रहसोमवंसरा-एसीं अअं क्खु राआ राअसूअसंतप्पिदहुदवहो खण्डवसंत-प्पिदहुदवहस्स किरीडिणो जेट्ठो भादा सुगहीदणामहेओ

---

भद्रस्यापि तथात्वात् तदनुक्त्वा कृष्णभ्रातृत्वेनेह कथनं तस्य कलिममित्र-त्वद्योतनार्थमथवा नरनारायणरूपयोस्तयोः सहजमित्रत्वम् अनलानिल-योरिव पुराणे प्रसिद्धम् तदेवेह ग्राह्यं तेन जन्मावधि सुहृदः भवान्त-रेऽपि सुहृद इत्यर्थः । क्रोधः हन्तिनीति शेषः । त्वया न कार्य्यः यदि मयि प्रेम स्नेहः तदा वनं गच्छेः अकरुणां दयाशून्यां चात्रपदवीं च-त्रियधर्मं युद्धादिकं मागाः नाश्रयस्व तथा च वैराग्यमेवाश्रयस्वेत्याशयः ।

(१) उद्धतशिखैव हस्तस्तेनाहूतोऽस्मद्विधो व्यसनिजनो दुःखि-जनो येन ।

---

(क) प्रसीदतु महाराजः समानेनापश्चिमेन प्रणयेन अहमेवा-ग्रतो गमिष्यामि ।

महाराअ जुहिट्ठिरो, एसा देवी पञ्चालराअकुलदेवता वेदि-मज्झसंभवा जसुसेणी, दुवे वि सरीरेण णिक्करुणस्स कालाणलस्स इन्धणीहोन्ति, परित्ताअह परित्ताअह । तयोरग्रतः पतित्वा । किं व्ववसिदं देवीए देवेण अ । (क)

युधि । अयि बुद्धिमतिके ! यन्नाथेन (१) प्रियानुजेन विना सदृशं तत् । उत्तिष्ठ उत्तिष्ठ सलिलमुपानय ।

चेटी । जं देवो आणवेदि । इति निष्क्रम्य पुनः प्रविश्य च । जेदु जेदु महाराओ । (ख)

युधि । पाञ्चालि ! त्वमपि तावत् स्वपक्षपातिनो वृकोदरस्य प्रियस्यार्ज्जुनस्योदकक्रियां कुरु ।

द्रौप । महाराअ एव्व करेदु अहं उण जलणं पविसिस्सं ।(ग)

युधि । अनतिक्रमणीयं लोकवृत्तं, भद्रे ! उदकमुपानय ।

चेटी । तथा करोति ।

---

(१) द्रौपद्या नाथेन, मम च प्रियानुजेन विना यत् सदृशं तत् व्यवसितमित्यर्थः ।

---

(क) हा ! भगवन्तो लोकपालाः ! परित्रायध्वं, सोमवंशराजर्षिम् अयं, खलु राजा राजसूयसंतर्पितद्विजवह्निः खाण्डवसंतर्पितद्विजवह्नेः किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः, एषा देवी पाञ्चालकुलदेवता यज्ञवेदिमध्यसम्भवा याज्ञसेनी द्वावपि शरीरेण निष्करुणस्य कालानलस्य इन्धनीभवतः, परित्रायध्वं, परित्रायध्वम् । किं व्यवसितं देव्या देवेन च ।

(ख) यद्देव आज्ञापयति । जयति जयति महाराजः ।

(ग) महाराज एव करोतु, अहं पुनर्ज्वलनं प्रवेक्ष्यामि ।

युधि । पादौ प्रक्षाल्योपस्पृश्य च । एष तावत् सलिलाञ्जलिर्गाङ्गेयाय भीष्माय गुरवे प्रपितामहाय (१) शान्तनवे पितामहाय चित्रवीर्य्याय । सास्रम् । तात ! तवाधुनाऽवसरः । अयमपि तव भवते स्वर्गस्थाय गुरवे सुगृहीतनाम्ने (२)पित्रे पाण्डवे ।

अद्य प्रभृति वां दत्तमस्मत्तो दुर्लभं पुनः ।
तात ! त्वयाऽम्बया सार्द्धमेतद्दत्तं निपीयताम् ॥

एतज्जलं जलजनीलविलोचनाय
भीमाय भोस्तव ममाप्यविभक्तमस्तु ।
एकं क्षणन्तु विषहस्व पिपासितोऽपि
पातुं त्वया सह जवादयमागतोऽस्मि ॥

अथवा सुक्षत्रियाणां गतिमुपगतं वत्स (३) मह्यं मृतोऽप्यशक्तो द्रष्टुम् । वत्स भीमसेन !

(४) मया पीतं पीतं तदनु भवताऽम्बास्तनयुगं
मदुच्छिष्टैर्वृत्तिं जनयसि रसैर्वत्सलतया ।

---

(१) पितामहस्य चित्रवीर्यस्य ज्येष्ठभ्रातृत्वेन पितृतुल्यत्वात् भीष्मे प्रपितामहत्वकथनं द्रष्टव्यम् ।

(२) सुगृहीतनाम्ने प्रातःस्मरणीयाभिधेयाय "स सुगृहीतनामा स्यात् यः प्रातरनुचिन्त्यते" इत्युक्तेः ।

(३) अहं मृतोऽपि तन्मरणादहमृतोऽपि युद्धमृतं वत्सं द्रष्टुमशक्तो न समर्थः तस्य युद्धमरणेन ब्रह्मलोकावाप्तेर्मम चावधा मरणेन न तत्स्थानप्राप्तेरिति भावः ।

(४) वितानेषु अग्न्याधानादिषु सोमे सोमयागे एवं सर्वत्र आवयोः पूर्वापरीभूतो विधिरभूत् अधुना त्वं निवापाम्भः तर्पणजलं पूर्वं पिबसि भ्रामतिक्रम्य तदुदकपानं तवानुचितमित्यर्थः ।

वितानेष्वप्येवं तव मम च सोमे विधिरभूत्
निवापाम्भः पूर्व्वं पिवसि कथमेवं त्वमधुना ॥

कृष्ण ! देहि जलाञ्जलिं तत्रभवते भीमाय।

द्रौप। हञ्जे बुद्धिमदिए! देहि मे उदअं। (क)

चेटी। तथा करोति।

द्रौप। उपसृत्य। जलाञ्जलिं पूरयित्वा। कस्स जलं देम्हि (ख)

युधि। तस्मै देहि जलं पूर्व्वं सहसा गच्छते दिवम्।
अस्मापि येन गान्धार्य्या रुदिते न समीक्षता ॥

द्रौप। णाह ! परिजणोवणीदं सग्गगदस्स पादोदअं भविस्सदि एदं। (ग)

युधि। फाल्गुनाग्रज !
असमाप्तप्रतिज्ञेऽपि जाते त्वयि ममानुजे।
मुक्तकेश्यैव ते दत्तः प्रियया सलिलाञ्जलिः।

द्रौप। उट्ठेहि महाराअ ! दूरं गच्छति दे भादा। (घ)

युधि। दक्षिणाक्षिस्पन्दनं सूचयित्वा। पाञ्चालि ! निमित्तानि मे कथयन्ति सम्भावयसि वृकोदरमिति, भवतु शीघ्रं दहनमुपसर्पावः।

---

(क) हञ्जे बुद्धिमतिके ! देहि मे उदकम्।
(ख) कस्य जलं दास्यामि।
(ग) नाथ ! परिजनोपनीतं स्वर्गगतस्य पादोदकं भविष्यत्येतत्।
(घ) उत्तिष्ठ महाराज ! दूरं गच्छति ते भ्राता।

द्रौप । आः ! पज्जलिदो भअवं हुदवहो । (क)

नेपथ्ये कलकलः ।

प्रविश्य संभ्रान्तः कञ्चुकी । परित्रायतां परित्रायतां महाराजः, एष खलु दुरात्मा कौरवापसदः क्षतजाभिषेकपाटलीकृताम्बरो रक्तभीषणगदाशनिः उद्यतकालदण्ड इवान्तको ऽत्रभवतीं पञ्चालराजतनयामितस्ततः परिमार्गमाण इतएवाभिवर्त्तते ।

युधि । हा दैव ! तेन निर्णयो जातः । हा गाण्डीवधन्वन् !

इति मुह्यति ।

द्रौप । हा अज्जउत्त ! मम सअम्बरसअंगहकुटुम्ब ! धनञ्जअ ! पिअं भादुअं सम्भावेसि ण उण महाराअं इमं दासजणं अ । (ख) इति मोहमुपगता ।

युधि । हा असदृशमल्ल ! हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक ! (१) हा वदर्य्याश्रममुनिद्वितीयतापस ! (२) हा द्रोणाचार्य्यप्रियशिष्य ! हा अस्त्रशिक्षाबलपरितोषितगाङ्गेय ! हा राधेयकुलकमलिनीप्रालेयवर्ष ! हा गन्धर्व्वनिर्व्वा-

---

(१) इन्द्रलोकगतेनार्जुनेन सुरारिर्निवातकवचादेर्बधकथा वनपर्वणि १७० अध्याये अनुसन्धेया ।

(२) द्वितीयतापस नरनारायणयोस्तत्र तपश्चरणात् तयोर्द्वितीयः नररूपतपस्विन् भूभारहरणाय तयोरेव क्षितितले कृष्णार्ज्जुनरूपाभ्यामाविर्भाव इति भारतीयाकथाऽनुसन्धेया !

---

(क) आः ! प्रज्वलितो भगवान् हुतवहः ।

(ख) हा आर्यपुत्र ! मम स्वयम्बरसंग्रहकुटुम्ब ! धनञ्जय ! प्रियं भ्रातरं सम्भावयसि न पुनर्महाराजमिमं दासजनञ्च ।

सितदूर्य्योधनः (१) हा पाण्डवकुलकमलिनीराजहंस!।

(२) तां वत्सलामनभिवन्द्य विनीतमम्बां
गाढ़ञ्च मामनुपगुह्य मयाप्यनुक्तः।
एतां स्वयम्बरवधूं सहसोमपृष्ट्वा
दीर्घप्रवासमपि वत्स! कथं गतोऽसि॥ इति मोहमुपागतः।

कञ्चु। भोः कष्टम्! एष दुरात्मा सुयोधनो यथेष्टमित एवाभिवर्त्तते, सर्व्वथा सम्प्रत्ययमेव कालोचितः प्रतीकारः, भद्रे बुद्धिमतिके! चितासमीपमुपनयात्रभवतीं पञ्चालराजतनयाम्। चेटीं प्रति। भद्रे! त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वा ब्रूहि। अथवा एवमेव स्थिते महाराजे अस्तमितयो भीमार्ज्जुनयोः क्व नु परित्राणम्।

नेपथ्ये। कलकलानन्तरम्। भोः भोः समन्तपञ्चकसञ्चारिणः! क्षतजास्वादमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कगृध्रजम्बूकोलूकवायसभूयिष्ठावशिष्टविरलाश्च योधाः! क्वतं मद्दर्शनसन्त्रासेन कथय कस्मिन्नुद्देशे याज्ञसेनी संनिहिता किं कथयामि तस्या लक्षणम्।

---

(१) गन्धर्व्वात् चित्ररथात् निर्वासितः परिमोचितः दुर्य्योधनो येन। गन्धर्व्वात्तद्रक्षणकथा च वनपर्व्वणि घोषयात्रापर्व्वणि २४४ अध्यायेऽनुसन्धेया।

(२) वत्सलां स्निग्धां तामम्बां मातरं विनीतं यथा तथा नम्रवदित्यर्थः। अनभिवन्द्य माञ्च वत्सलमिति विपरिणामय्यान्वयितव्यम्। गाढ़ं यथा तथा अनुपगुह्य अनालिङ्ग्य मयानुक्तश्च तव ज्येष्ठाज्ञाप्रतिपालकत्वेन मदाज्ञां विनापि मरणरूपं दीर्घप्रवासगमनकृत्यन्तानुचितमित्यर्थः।

(१) ऊरू करेण परिघट्टयः सलीलं
दुर्य्योधनस्य पुरतोऽपहृताम्बरा या ।
दुःशासनस्य करकर्षणभिन्नमौलिः
सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥

कञ्चु । देवि याज्ञसेनि ! परिभूयसे सम्प्रत्यनाथा कुरुकुल-कलङ्केन ।

युधि । सहसोत्थाय । पाञ्चालि ! न भेतव्यं न भेतव्यम्, कः कोऽत्र भोः ? उपनीयतां मे सज्जं धनुः दुरात्मन् दुर्य्योधनहतक ! आगच्छ अपनयामि ते गदाकौशलसम्भूतं भुजदर्पं शिलीमुखासारेण । अन्यच्च रे कुरुकुलाङ्गार !

(२) प्रियमनुजमपश्यंस्तं जरासन्धशत्रुं
कुपितहरकिरातद्वेषिणं तञ्च वत्सम् ।
त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो

---

(१) सलीलम् "अलासतामिति दत्तसङ्केतम्" यथा तथा करेण ऊरू सक्थिनी परिघट्टयतः आस्फालयतः सुयोधनस्य पुरतो याऽपहृताम्बरा दुःशासनस्य करकर्षणेन हस्ताकर्षेण भिन्नः विश्लेषितः मौलिः कबरीबन्धो यस्याः तादृशी द्रौपदी पुनः क कुत्र प्रदेशे वर्त्तते तत्कथयत ।

(२) कुपितहरएव किरातः व्याधरूपस्तस्य द्वेषिणं तेन सह कृतयुद्धं तपसा तोषितो हरोव्याधरूपेणार्ज्जुनेन सह द्वन्द्वयुद्धं कृत्वा तेनापि तुष्टः स्वरूपमुत्तरत्र दर्शितवानिति वनपर्व्वीया २६ अध्यायस्था कथात्रानुसन्धेया । त्वमिव भ्रातृदुःशासनमरणेऽपि भवान् जीवति नैवं प्राणितुमहं शक्तः, तव प्राणापरित्यागे हेतुगर्भविशेषणं क्रूरचेताः वात्सल्यरहितचित्तः तथात्वाच्चाम्हतस्त्वमिति भावः । एवं जीवनाशक्तोऽपि तवास्त्रन् अपहर्त्तुमपसारयितुं न शक्त इति न । किन्तु शक्तएवेत्यर्थः ।

न च पुनरपहर्त्तुं बाणवर्षैस्तवासून् ॥

ततः प्रविशति गदापाणिः क्षतजसिक्तसर्व्वाङ्गो भीमसेनः ।

भीम । उद्धतं परिक्रामन् । भो भोः समन्तपञ्चकसञ्चारिणः सैनिकाः कोऽयमावेगः ?

(१) नाहं रक्षो न भूतो रिपुरुधिरजलप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः! समरशिखिशिखादग्धशेषाः कृतं व
स्त्रासेनानेन लीनै र्हतकरितुरगान्तर्हितैरास्यते किम् ।

कथयन्तु भवन्तः कस्मिन् देशे पाञ्चाली तिष्ठति ।

कञ्चु । देवि पाण्डुस्नुषे! उत्तिष्ठोत्तिष्ठ सम्प्रति चिताप्रवेश एव श्रेयान् ।

द्रौप । सहसोत्थाय । कहं ण सम्भावेमि अज्ज वि चिदासमीवम् ॥ (क)

युधि । कः कोऽत्र भोः ? सनिषङ्गं धनुरुपनय, कथं न

---

(१) नाहं रक्षो राक्षसः नापि भूतः पिशाचः किन्तु प्रकामं यथेष्टं रिपुरुधिरमेव जलं तेनाप्लाविताङ्गः संसिक्तदेहो निस्तीर्णः पारं गतः उरुप्रतिज्ञैव गुरु प्रतिज्ञैव जलनिधिगहनः समुद्ररूपदुर्गमप्रदेशो येन तादृशः क्षत्रियोऽस्मि समरमेव शिखिशिखा वह्निशिखा सर्वनाशकत्वात् तया दग्धेभ्यः नाशितेभ्यः शेषा अवशिष्टा हे राजन्यवीरा ! वो युष्माकमनेन त्रासेन भीत्या कृतं त्राससाध्यं नास्तीत्यर्थः । तेषां त्रासमेव द्योतयति किं कस्मात् हेतोः हतकरितुरगान्तर्हितैः युष्माभिरास्यते स्थीयते तथा च त्रासकारणाभावेन त्रासो न कर्त्तव्य इत्यर्थः ।

---

(क) कथं न सम्भावयाम्यद्यापि चितासमीपम् ।

कश्चित् परिजनः ? भवतु, बाहुयुद्धेनैव दुरात्मानं गाढ़मालिङ्ग्य ज्वलनमभिपातयामि । इति परिकरं बध्नाति ।

कञ्चु । संयम्यन्तामिदानीं नयनोपरोधिनो दुःशासनावकृष्टा मूर्द्धजाः, अस्तमिता सम्प्रति प्रतीकाराशा, चितासमीपमेव द्रुततरं सम्भावय ।

युधि । न खल्वनिहते तस्मिन् दुर्य्योधनहतके संहर्त्तव्याः केशाः ।

भीम । पाञ्चालि ! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणी आत्मपाणिभ्याम् [ ]

द्रौप । भयात् परिक्रामति ।

भीम । तिष्ठ तिष्ठ भीरु ! क्वाधुना गम्यते । इतिकेशेषु ग्रहीतुमिच्छति ।

युधि । बलाद्भीममालिङ्ग्य । दुरात्मन् भीमार्ज्जुनशत्रो दुर्य्योधनहतक ! क्वेदानीं यास्यसि ।

आशैशवादनुदिनं जनितापराधः
क्षीवो मदेन भुजयो र्हतराजपुत्र ।
आसाद्य मे ऽन्तरमिदं भुजपञ्जरस्य
जीवन् प्रयासि न पदात् पदमद्य पाप ! ॥

भीम । अये ! कथमार्य्यः सुयोधनशङ्कया निर्द्दयं मामालिङ्गति, आर्य्य ! प्रसीद प्रसीद ।

कञ्चु । निरूप्य । सहर्षम् । कथं कुमारो भीमसेनः ? दिष्ट्या

---

[तिष्ठ तिष्ठ अहमेव संहरामि ] क्वचिदधिकः पाठः ।

वर्द्धसे महाराज ! अयं खल्वायुष्मान् भीमसेनः सुयोधनक्षत-जारुणितसकलशरीराम्बरो दुर्लक्ष्यव्यक्तिरलमधुना सन्देहेन ।

चेटी । द्रौपदीमालिङ्ग्य । भट्टिणि ! एष क्खु पूरिदपड़िसाभरो णाहो देवीए वेणीसंहारं कादुं तुमं अस्सेसेदि । (क)

द्रौप । हञ्जे ! किं मं अलीअवअणेहिं आसासेहि । (ख)

युधि । जयन्धर ! अपि सत्यं ? नायं मम वैरी सुयोधनहतकः ?

भीम । देव अजातशत्रो ! भीमार्ज्जुनगुरो ! कुतोऽद्यापि सुयोधनहतकः ? मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविणः ।

(१)भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनं भीमगात्रे
लक्ष्मीरार्य्ये निषण्णा चतुरुदधिपयः सीमया सार्द्धमूर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप ! तदधुना धार्त्तराष्ट्रस्य शेषम् ॥

---

(१) धार्त्तराष्ट्रस्य शरीरं भूमौ क्षिप्तं भूमिसात् कृतमित्यर्थः । तस्य असृग्रूपचन्दनं रक्तरूपानुलेपनं भीमगात्रे भयानकदेहे निहितं तस्य भृत्या दासा मित्राणि बान्धवा योधा भटाः निखिलं कुरुकुलञ्च एतत् एतानि रणाग्नौ युद्धवह्नौ दग्धं दग्धानि नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति ( १,२,६९ पा० सू० ) नपुंसकैकशेषः । विभाषया एकवचनञ्च । नामैकं नामैव शेषं तेन मरणं सूचितमिति द्रष्टव्यम् ।

---

(क) भट्टिनि ! एष खलु पूरितप्रतिज्ञाभारो नाथो देव्या वेणीसंहारं कर्त्तुं त्वामन्विषयति ।

(ख) हञ्जे ! किं मामलीकवचनैराश्वासयसि ? ।

युधि । भीममवलोकयन् अश्रूणि प्रमार्ज्जयति ।

भीम । पादयोः पतित्वा । जयत्वार्य्यः ।

युधि । वत्स ! बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । कथय कच्चिज्जीवति भवान् समं किरीटिना ?

भीम । निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमोऽर्ज्जुनश्च ।

युधि । सस्नेहं पुनर्गाढ़मालिङ्ग्य

रिपोरास्तां तावन्निधनमिदमाख्याहि शतशः ।

प्रियो भ्राता भीमो मम भवसि योऽसौ वकरिपुः ॥

भीम । आर्य्य ! सोऽहम् ।

युधि । (१) जरासन्धस्योरःसरसि रुधिरासारसलिले

तटाघातक्रीड़ाललितमकरः संयति भवान् ॥

भीम । आर्य्य ! मुञ्चतु मां क्षणमेकं भवान् ।

युधि । किमपरमवशिष्टम् ।

भीम । आर्य्य ! सुमहदवशिष्टं, संयच्छामि तावदनेन दुर्य्योधनदुःशासनरुधिरोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् ।

युधि । सत्वरं गच्छतु भवान्, अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम् ।

---

(१) रुधिरासारसलिले रक्तप्रवाहरूपजले उरः सरसि उरःसरोवररूपायां संयति तटाघातक्रीड़ाललितमकरः तटाघातः हर्षहेतुकं शृङ्गिदन्तिभिर्म्मृदाद्युत्खननं सएव क्रीड़ा तत्र ललितोमनोहरः मकरः जलजन्तुविशेषरूपः भवान् ।

भीम । भवति पञ्चालराजतनये ! दिष्ट्या वर्द्धसे रिपुकुलक्षयेण ।

द्रौपदी । उपसृत्य । जेदु जेदु णाहो । (क) इति भयादपसर्पति ।

भीम । राजपुत्रि ! अलमेवं मामालोक्य त्रासेन, पश्य ।

येनाकृष्टासि राज्ञां सदसि नृपशुना तेन दुःशासनेन-
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते ! राज्ञः कुरूणामपि रुधिरमिदं मद्गदाचूर्णितोरो
रङ्गेष्वङ्गेषु सक्तं तव परिभवजस्यानलस्योपशान्त्यै ।

बुद्धिमतिके ! क्व सम्प्रति भानुमती योपहसति
पाण्डवदारान् ? भवति वेदिसम्भवे ! याज्ञसेनि !

द्रौप । आणवेदु णाहो । (ख)

भीम । स्मरति भवती, यन्मयोक्तं चञ्चद्भुजेति पूर्व्वोक्तमेव पठति ।

द्रौप । णाह ! सुमरामि अणुहवामि अ । (ग)

भीम । भवति ! संयम्यतामिदानीं धार्त्तराष्ट्रकुलकालरात्रिर्दुःशासनविलुलिता वेणी ।

द्रौप । णाह ! बिसुमरिदह्मि एदं बाबारं णाहस्स पसादेण पुणोबि सिक्खिस्सं । (घ)

चेटी । वेणीं बध्नाति

---

(क) जयति जयति नाथः । जेस्तुवन्तू तिबन्ती इत्युक्तेः स्तुतक्षिप् ।

(ख) आज्ञापयतु नाथः ।

(ग) नाथ ! स्मरामि, अनुभवामि च ।

(घ) नाथ ! विस्मृतास्मि एतं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्यामि ।

नेपथ्ये। (१)

क्रोधान्धैर्यस्य मोक्षात् कुरुनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यतुलभुजबलैः पार्थिवान्तःपुराणि।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
सोऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः॥

युधि। देवि! एष ते वेणीसंहारोऽभिनन्द्यते नभस्तलसञ्चारिणा सिद्धजनेन।

ततः प्रविशतो वासुदेवार्ज्जुनौ।

वासु। उपगम्य। विजयतां निहतसकलारातिमण्डलः सानुजः पाण्डवकुलचन्द्रमा महाराजो युधिष्ठिरः।

अर्ज्जु। जयत्यार्य्यः।

युधि। विलोक्य। अये! कथं भगवान् वासुदेवः, किरीटी च? भगवन्नभिवादये। किरीटिनं प्रति। एह्येहि वत्स! परिष्वजस्व माम्।

अर्ज्जु। प्रणमति।

युधि। वासुदेवं प्रति। देव! कुतस्तस्य विजयादन्यत् यस्य खलु भगवान् पुण्डरीकाक्षः स्वयं मङ्गलमाशास्ते।

---

(१) यस्य कृष्णायाः केशपाशस्य मोक्षात् अतुलभुजबलैः कुरुपाण्डवनरपतिभिः प्रत्याशं सर्व्वासु दिक्षु नरपतीनामन्तःपुराणि तत्स्याऽबलाजनाः इत्यर्थः। मुक्तकेशानि कृतानि कुपितयमतुल्य धूमकेतुर्निखिलोत्पातहेतुत्वात् कृष्णत्वाच्च सोऽयं कृष्णायाः केशपाशः बद्धः इदानीं प्रजानां निधनं विरमतु राज्ञां कुलेभ्यश्च स्वस्ति कुशलमस्तु।

(१)कृतगुरु महदादिक्षोभसंभूतमूर्त्तिं
गुणिनमुदयनाशस्थानहेतुं प्रजानाम्।
अजमजरमचिन्त्यं चिन्तयित्वा भवन्तं
भवति जगददुःखं किं पुनर्देव दृष्ट्वा॥

अर्ज्जुनमालिङ्ग्य। वत्स! परिष्वजस्व माम्।

वासु। एते खलु भगवन्तो व्यासवाल्मीकिजामदग्न्यजाबालिप्रभृतयो महर्षयः कल्पिताभिषेकमङ्गला नकुलसहदेवसात्यकिमुखाश्च सेनापतयो यादवमत्स्यमागधकुलसम्भवाश्च राजकुमाराः स्कन्धोत्तम्भिततीर्थवारिकलसास्तवाभिषेकं धारयन्ति अहमपि चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्ज्जुनेन सह सत्वरमागतः।

---

(१) हे देव! सर्वप्रकाशक! कृताः स्वपरिणामेनोत्पादिताः गुरवः स्थूलभूतानि पृथिव्यादीनि महदादयश्च येन तादृशस्याव्यक्तस्य प्रधानस्य क्षोभेण स्वष्यनुगुणप्रवृत्त्या संभूता मूर्त्तिर्यस्य तथाविधं गुणिनं सत्त्वरजस्तमोरूपगुणत्रयोपाधिकम्। गुणत्रयोपाधिकत्वे प्रयोजनमाह प्रजानां लोकानामुदय उद्भवः नाशः संहारः स्थानं स्थितिः पालनमित्यर्थः। तेषां हेतुभूतं तथा च जन्मस्थितिप्रलयार्थमेव गुणत्रयोपाधिकत्वमिति भावः। न जायते इत्यजमुत्पत्तिशून्यमजरं नाशशून्यं तथा च क्षयोदयरहितत्वात् नित्यमित्यर्थः। अचिन्त्यम् इदन्तया निश्चेतुमशक्यमतद्व्यावृत्त्यैव बोध्यमिति यावत्। एवम्भूतं भवन्तं चिन्तयित्वा ध्यानप्रवाहेण संस्मृत्यापि जगत् विश्वस्था जना अदुःखमाध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रयरहितं भवति। अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। प्रकृतेः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते इति श्रुतेः। किं पुनर्दृष्ट्वा भवन्तं साक्षात् कृत्य।

युधि । किं नाम चार्वाकेण विप्रलब्धा वयम् ?

भरोषम् । क्वासौ धार्त्तराष्ट्रसखः पुण्यजनापसदः, येन मे महांश्चित्तविभ्रमः कृतः ।

भाव । गृहीतः स दुरात्मा नकुलेन । कथय महाराज ! किमस्मात् परं समीहितम् ।

युधि । भगवन् ! [पुण्डरीकाक्ष ! किं न ददासि प्रसन्नः] परमपि प्रियमस्ति अहन्तु पुरुषसाधारणया बुद्ध्या सन्तुष्यामि नखल्वतः परमर्थयितुं क्षमः । पश्यतु देवः ।

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं,
पाञ्चाल्या मम दुर्नये पतितया तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
किं नामान्यदतः परं प्रियतरं यत् प्रार्थये त्वामहम् ॥

तथापि प्रीतश्चेद्भगवांस्तदिदमस्तु ।

(१) अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं
भवतु च भवद्भक्तिर्द्वैधं विना पुरुषोत्तम ! ।

---

(१) पुरुषायुषं पुरुषस्यायुः कालं व्याप्य पुरुषास्यायुः जीवितकाल श-तायुर्वै पुरुष इति श्रुतेः शतवर्षमित्यर्थः । अचतुरेत्यादिना (५,४,७७, पा०सू०।) निपातनात् सिद्धम् । हे पुरुषोत्तम ! द्वैधं संशयं विना भवद्भक्तिः भवति त्वयि भक्तिः परमप्रेमानुरागः भवतु गुणेषु विशेषवित् गुणविवेकी विद्वद्बन्धु र्भूयात् भूपः सततसुकृती सततशुभकारी भूयादित्यर्थः ।

---

[ एवं पुण्डरीकाक्ष ! न किंचिन्नददाति भगवान् प्रसन्नः ] इत्यपि पाठः ।

दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवित्
सततसुकृती भूयाद् भूपः प्रसादितमण्डलः॥
वाद्य। एवमस्तु। इति निष्क्रान्ताः सर्व्वे।

इति षष्ठोऽङ्कः।

---

इति महाकविश्रीभट्टनारायणविरचितं
वेणीसंहारनाम नाटकं

## सम्पूर्णम्।

---

इति महामहोपाध्यायकालिदाससार्वभौम भट्टाचार्य्यात्मसम्भव
श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यैविरचिते
वेणीसंहार व्याख्याने वेणीसंहार नामक
षष्ठाङ्क व्याख्या।

---

প্রিণ্টার শ্রীক্ষেত্রমোহন মুখোপাধ্যায়।